1938-39
Vol. XXI

१८६० शकाब्दे
२१श-वर्षस्य

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्




सम्पादकः—

महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारि-सम्पादकः—

श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकत्रयम् ३)

# एकत्रिंशवर्षीय-संस्कृत-साहित्य-परिषत्-पत्रिकास्थ-विषयानुक्रमणी

[ वर्णसमाम्नायानुसारिणी ]

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| May, 1938 | १८६०-शकीये वैशाखे<br>२१श-वर्षस्य १म-संख्या | Vol XXI, No. 1 |


## प्रशान्तरत्नाकरम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—श्रीकालीपदतर्काचार्यः ]

तद् यावत् स्वल्पेनैव कालेन ममैवानुगतिमनुरुन्धानान् वीरपरीवारानाहूय स्वकीयं कृत्यविशेषमारम्भयामि ! तत् क्व नु खलु वीरवलः ? (स्मृत्वा) आं ! स खलु प्रेषितो मयैव पर्वतोपत्यकायां सन्निहितायां नवीनस्य रत्नपुरस्य नगरस्य संघटनाय । यतः प्रतिदिनमेव स्वल्पप्रयत्नमनुतिष्ठतामपि दारिद्र्यपरिक्लिष्टैर्जानपदैरुपचीयते वर्गः, तदिदानीं नवीननगरसन्निवेशमन्तरेण न शक्या स्ववर्गव्यवस्था साधयितुम् । भवतु शेषानामन्त्र्य कृत्यमारम्भयामि ।

( वंशीं वादयति )

( ततः प्रविशन्ति दण्डहस्ताश्चत्वारः पुरुषाः )

१मः—जयति जयति स्वामी । आदिश्यतां कार्यम् !

रत्ना—आं प्रीतोऽस्मि, यथाकालं प्राप्ताः स्थ ! अपि पारयिष्यथ यदहं ब्रवीमि ।

१मः—स्वामिन्, अस्त्यत्र प्रश्नावकाशः ? संरक्षिता वयं स्वामिना सपरिजना मृत्युमुखं प्रविशन्तः। तदिदं जीवनमेव प्रभोरायत्तं, का कथा शरीरस्य। तदादिशतु स्वामी, येन तत्परिपालनेन वयं कृतार्था भवामः।

सर्वे—कः सन्देहः !

रत्ना—यद्येवं शृण्वन्तु भवन्तः, संप्रति हि—

दुर्भिक्षरक्षः परितो महाभयं
व्यादाय वक्त्रं ग्रसते जनोच्चयान्।
दिने दिने मृत्युमुखं विशन्त्यमी
धनी जनो दुःखमिदं न बुध्यते॥

तद् वित्तवतामनिच्छतामपि वित्तानि यथा दरिद्रसेवायामुपयुज्येरन्, तथास्माभिः करणीयम्। अस्ति किल युष्मच्छरीरे शौर्यम् अस्ति च भूयान् समुत्साहः। तदेवं स्वजनानां परितो दुर्भिक्षदावानलेन दह्यमानानां दीनानाञ्च दुःखमौदासीन्येन कथम् उपेक्षणीयम्। उत्तिष्ठत, धनिकानां धनं बलात्कारेण गृहीत्वा दुर्गतानां दुःखशतानि निर्वापयत। स्वजनानां मुखमालिन्यमपसारयत, स्वीयं जीवनं शान्तिमयं कुरुत।

गर्वं खर्वयत प्रभावजनितं वित्तेश्वराणां मुहुः
सर्वेषां समताऽस्तु भूमिवलये दैन्यं लयं गच्छतात्।
एको भूरिविलासभोगनिरतो भोज्यं विना चापरः
प्राणैरेव वियुज्यते कथमिदं वैषम्यमालोक्यताम्।

सर्वे—सत्यमाह स्वामी। तदस्य प्रतीकारं वयं करिष्यामः॥

रत्ना—यद्येवं श्रूयताम्।

सर्वे—अवहिताः स्मः।

रत्ना—प्रतिदिनमेव वर्द्धते बलमस्माकम्। ये दुर्गताः स्वजन-पोषणाशक्ताः शक्तिमन्तः, ये वा दुरन्तवृत्तेन राज्ञा कामेश्वरेण निर्विचारं निगृहीताः ते सर्व एव दारिद्र्यविद्रावणकामा वा वैरप्रतीकारवाञ्छया वा अस्मदीयं पक्षमस्मत्प्रयुक्तैरुपजापैरनुप्रविशन्ति, तदिदानीं यथा नवीन-

नगरसन्निवेशस्तेषां वसतिसौकर्याय तथैव प्रभूतधनसंग्रहोऽपि तेषां शरीर-यात्रानिर्वहणाय कर्तव्यः ।

सर्वे—आज्ञापयतु स्वामी ।

रत्ना—यः किलास्य प्रान्तस्य महीपालः कामेश्वरो नाम । तस्य किल-

अत्याचारेण परितो दीना दुर्भिक्षपीडिताः ।
अनिच्छन्त्यः प्रजा हन्त ग्रस्यन्ते मृत्युना पुरः ॥

अपि च

दुरन्तशीलः स विलासहेतोः प्रभूतमर्थं क्षपयत्यजस्रम् ।
दीनाय दानं न कपर्दकस्य विधित्सते हन्त वहन्नवज्ञाम् ॥

तदादौ तस्यैव दुष्टभूपतेरभिग्रहं भवद्भिः क्रियमाणमिच्छामि ।

सर्वे—युक्तम् ! स्वामिन्, उपदिश्यतां कृत्यमार्गः !

रत्ना—श्येनक, त्वं सत्वरं गत्वा नवनगरसन्निवेशव्यापृतं वीरबलं विज्ञापय—यथा अद्यैव रात्रौ मया सह वीरबलाधिष्ठितैः कतिपयैः पुरुषैः कामेश्वरस्य दुष्टमहीपालस्य राजधानीप्राकारोपकण्ठे सन्निहितैर्भवितव्यम् ।

यूयमपि

भाण्डागाराद् गृहीत्वा चितमुपकरणं स्वीयसंसारयोग्यं
गत्वा गेहं स्वकीयं शमयत सुहृदश्छादयित्वा स्वतथ्यम् ।
भूयः काले प्रदोषे गिरिगहनमिदं प्राप्य कृत्यं स्मरन्तः
सोत्साहं शौर्यराशिं प्रकटयत शुभाः सन्तु वः कृत्यमार्गाः !

सर्वे—यथाज्ञापयति स्वामी ।

( निष्क्रान्ताः )

रत्ना—तद् यावदहमपि परममित्रेण कायस्थेन वसुदासेन सत्वरं कपटलेखं कारयित्वा कामेश्वरसकाशं प्रापयामि ।

( निष्क्रान्तः )

( ततः प्रविशति राजसभास्थः कामेश्वरो विभवतः परीवाराश्च )

कामे—अहो, राज्यं नाम परमप्रमोदस्थानं राज्ञाम् ?

भीत्या प्रजाभिः प्रतिपादितेन
स्वच्छन्दतोऽर्थेन भवन्ति भोगाः ।
ते ह्यन्यदोषं समुदाहरेयु-
स्तद्दोषमन्ये न हि वक्तुमर्हाः ॥

शास्त्रं तस्य कथामात्रं नीतिस्तस्यैव वासना ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ।

तदेवम्भूतस्य राजपदस्य सौभाग्यवशादुपात्तस्य स्वच्छन्दतो भोगमकुर्वाणः कथं तस्य निष्फलतां सम्पादयिष्यामि ? प्रजानां दैन्यादिकं विचारयतो राज्ञः स्वभोगपरिभ्रंशेन निष्फलतैव राज्याधिकारस्य ! आत्मन एव ;हि कामाय सर्वमिदं जगत् प्रियं भवति न जातु कामाय परेषामिति भगवती श्रुतिरपि साटोपमेव प्रतिपादयति। तदात्मसुखनिरपेक्षः कथं प्रजासुखमीक्षेय। ( प्रकाशम् ) आर्य वाचस्पते, कथ्यतामद्यतनं राजकार्यम् ?

मन्त्री—देव, सन्ति कानिचित् प्रार्थनापत्राणि, तेषां विचारं देवः कर्तुमर्हति ।

राजा—प्रार्थनापत्राणि ? केषां पुनस्तानि ?

मन्त्री—कतिपयजानपदानाम् ।

राजा—किमधिकृत्य ?

मन्त्री—राजकोषादर्थप्राप्तिमधिकृत्य ।

राजा—चित्रं भोः चित्रं ! गरीयानेष कालमहिमा, यत् प्रजा दत्तापहारदोषमविगणय्य राजकोषादर्थं कामयन्ते ! तदार्य वाचस्पते, विज्ञाप्यन्तां जानपदाः—

दत्तापहारदोषस्य प्रजासु विनिवृत्तये ।
राजकोषधनं राज्ञा प्रजाभ्यो नैव दीयते ।

अपि च

राज्ञो राजेत्याख्यया किन्नु कृत्यं
कोषाद् वित्तं गृह्यते चेत् प्रजाभिः ।
षष्ठं भागश्चापि राज्ञा गृहीतं
मोहाविष्टा हन्त नैताः सहन्ते ।

मन्त्री—यथाज्ञापयति देवः ।

( ततः प्रविशति सम्भ्रान्तः पुरुषः )

पुरुषः—जयति जयति महाराजः । महाराज, एष कश्चिद् ब्राह्मण उन्मत्तकल्पः श्रीमन्तं द्रष्टुमिच्छति, दौवारिकैरन्यैश्च मुहुः प्रतिषिध्यमानोऽपि न निवर्तते, श्रुत्वा देवः प्रमाणम् ।

राजा—सर्वतः पुरुषैरधिष्ठितं प्रवेशय ।

पुरुष—अहो, प्रत्यहमेवं जानपदानां कातरकोलाहलेन समुद्वेजितोऽस्मि । आर्य वाचस्पते, इतो मुक्तेरुपायः परिचिन्त्यताम् । किंवात्र वसन्तको मन्यते ?

मन्त्री—देव, राजशरणा दीनप्रजाः कं वा शरणं व्रजन्तु, भवतु तथापि राजादेशादुपायं चिन्तयिष्यामि ।

वसन्तकः—वयस्य, अहं मन्ये याचकानां विद्रावणाय कश्चित् पणः स्थाप्यताम् ।

राजा—कीदृशः पणः ?

वसन्तकः—अस्ति किल दुष्टतमानां दण्डविधानाय भवतः पञ्जरगतः तीक्ष्णविषधरो भुजङ्गः ।

राजा—किन्तेन ?

वसन्तकः—यस्तं विषधरं भुजङ्गं स्वकरेण गृह्णीयात् स एव सत्यं दीनतया गृह्यमाणो राजकोषादर्थं लभेत ।

राजा—यदि बहवस्तथैव कुर्य्युः क्षीणस्तर्हि कोषः ।

वसन्तकः—वयस्य, उन्मत्तोऽसि ननु नास्ति तादृशं दैन्यम्, येन स्व-

जीवनं तृणीकृत्य तदपनुत्तये भुजङ्गोऽपि शक्यः स्वेच्छया समाक्रमितुम्। तदेवं गतः कोलाहलो दीनानाम्।

मन्त्री—महाब्राह्मण, दैन्यस्य तत्त्वं नावगच्छसि, येनैवमविचारितं ब्रवीषि,

तथाहि— यदा दैन्येनान्यं शरणमुपगच्छन्ति मनुजा
यदा स्वेषां प्राणान् कथमपि नवा रक्षितुमलम्।
तदा वह्निज्वाला ज्वलति शिरसि भ्रश्यति मति-
र्भुजङ्गः स्रग्भावं भजति यदि दैन्यक्षतिरतः॥

(ब्राह्मणेन सह प्रविश्य पुरुषः)

पुरुषः—अये, अद्यापि कथासक्तो देवः, तदवसरं प्रतिपालयामि।

मन्त्री—(दृष्ट्वा) देव, एष तेन ब्राह्मणेन सह प्रविष्टः पुरुषो देवस्यावसरं प्रतिपालयति। श्रुत्वा देवः प्रमाणम्।

राजा—उपसर्पतु।

मन्त्री—अरे प्रविश।

पुरुषः—एष देवस्तिष्ठति, तदुपसर्पतु भवान्। जयति जयति देवः, एष स ब्राह्मणः।

ब्राह्मणः—अहो राजश्रीः!

गेहं मौक्तिकमालिकाद्युतिजुषा चन्द्रातपेनोज्ज्वलं
सौम्या चामरधारिणी कतिविधैः सम्भूषिता भूषणैः।
एतत् काञ्चनदण्डमण्डितमितः सद्रत्नसिंहासनं
किं लोकान्तरमागतोऽस्मि किमथो स्वाप्नश्रियं लोकये॥

अपि नाम एष एव नो दुर्भिक्षराक्षसनिगृहीतानां दीनजानपदानां पालको राजा? नैवं विश्वसितुमर्हामि,

कुतः? प्रजानां ग्रसते यत्र प्राणान् दुर्भिक्षमन्वहम्।
तस्य राज्यस्य राजासौ विलासेन प्रवर्द्धते॥

यथा तथा वा भवतु, प्रस्तुतमिदानीमनुसरामि। (प्रकाशं) देव,

राजा—अये, जयशब्दमनुच्चार्य प्रथमत एव देवेत्यामन्त्रणं न प्रजासमुदाचारः ! अथवा उन्मत्तः खल्वेषः !

ब्राह्मणः—( स्वगतम् ) अहो राजगर्वः (प्रकाशम्) आं ! देव, सत्यमुन्मत्तीकृतः समुदाचारं विस्मृतवानस्मि ।

राजा—केनैवमुन्मत्तीकृतोऽसि ?

ब्राह्मणः—देव, दारिद्र्यपिशाचेन ।

राजा—तत् को भवान् ?

ब्राह्मणः—महाराजेन समधिष्ठितस्य विष्णुपुरपत्तनस्य काश्यपे कुले जातः सुतपा नाम ब्राह्मणः ।

राजा—अस्ति ते माता पिता च ?

ब्राह्मणः—आं ! देव, द्वयमेवेदमासीत् ।

राजा—अथ साम्प्रतम् ?

ब्राह्मणः— साम्प्रतं देव, द्वावेव तौ मन्दभाग्यस्य दारिद्र्यदूषितस्य मे भोज्यनिष्पादनशक्तिविरहेणेव—

क्षुधया परिशीर्णविग्रहौ शमनेनाधिकृतौ दिवं गतौ ।
अधुनापि दहत्यहर्निशं हृदयं लोहमयं हि तत्स्मृतिः ॥

राजा—अस्त्यपरः कोऽपि ?

ब्राह्मणः—देव, देव, ( रोदिति )

राजा—अलमनेन रोदनेन, वक्तव्यं ब्रूहि ।

ब्राह्मणः—देव, देव, अत एव भवन्तं प्रपन्नोऽस्मि ।

राज—विदितमेवेदं, तद् विशेषं ब्रूहि ।

ब्राह्मणः—देव, अस्त्येवाद्यापि मे मन्दभाग्यस्य पत्नी पतिव्रता वत्सलः शिशुः पुत्रश्च ।

वसन्तकः—पतिव्रतेति वाङ्मात्रमेतत् !

ब्राह्मणः—कथमिव ?

वसन्तकः—स्त्रीणां पातिव्रत्यं स्वर्णकाराणां चौर्यविमुखता च इत्येतदुभयमेव नः समं प्रतिभाति ।

ब्राह्मणः—धिक् प्रहसनम् ! मूढ, ब्राह्मणब्रुव, स्त्रीणां गौरवं न वेत्सि, येनैवं परिहासकृते महापातके पतन्तमात्मानं न रुणत्सि । मूढ,

स्त्री मातृरूपा स्तनदुग्धदायिनी
सर्वं जगत् पाति शुभानुकम्पया ।
भक्त्या स्त्रियो यत्र भवन्ति पूजिता
सर्वे सुरास्तत्र वहन्ति तुष्टताम् ॥
श्रुत्वा पत्युः शङ्करस्यापवादं
दाक्षायण्या जीवनं त्यक्तमारात् ।
कत्येवान्याः स्वामिशोकान्म्रियन्ते
पातिव्रत्यं नास्ति तासां तथापि ?
तदेवंवादिनी जिह्वा तव च्छेदनमर्हति ।
नूनं राज्ञा सखित्वेन पातकी नैव दण्ड्यसे ॥

राजा—ब्राह्मण, संयमः परिपाल्यताम् । प्रस्तूयतां शेषः । वयस्य, अलं परिहासभाषितैरन्यथा वा अन्तरा प्रतिबन्धेन । ब्राह्मण, ज्ञायते, अस्ति ते पतिव्रता पत्नी वत्सलः शिशुः पुत्रश्चेति । किं तयोः ?

ब्राह्मणः—देव, किं कथयामि, वदतो मे दीर्यत इव हृदयं ! तावपि क्षणादुत्तरमसन्ताविव पश्यामि ।

राजा—कथमिव ?

ब्राह्मणः—देव, तावपि मन्दभाग्यस्य ममैवाधन्यतया राजयक्ष्मणा समाक्रान्तौ ।

सर्वे—आं राजयक्ष्मणा समाक्रान्तौ ? धिक् कष्टम् !

राजा—तत् किमिति राजसभामुपगतोऽसि । वैद्यं पश्य, येन रोगानुरूपं भेषजमुपदेष्टव्यम् ।

---

# चक्रवाकी विलापः

निबन्धकः—वैद्याचार्य-श्रीभोलानाथ-कविराज-विद्यानिधि-
सरस्वती-कविभूषण-भिषग्रत्नायुर्वेदशास्त्री ]

श्रीमन् रथाङ्ग तव सङ्गमृते मृतेव
निर्वाहयामि कति हन्त निशा भृशार्ता ।
धिग् दैवमन्यसुखदं मम दुःखहेतुं
कर्मैव वा तनुभृतां सुखदुःखबीजम् ॥१॥

रात्रिर्गता बहुमतापि विलासिनीनां
हा हन्त मे विफलमेव वियोगभाजः ।
आजन्म दुःखदवदाहजुषां निशान्ते
श्रेयो ह्यरण्यगमनं मरणान्तरं वा ॥२॥

प्रेमामृतं प्रिय तव प्रतिपद्य सद्य-
स्तृप्तिं प्रयामि रजनावनुरज्यमाना ।
इत्याशया तरलिताऽन्वहमह्नि साहं
सायं पुनर्विगलितः सकलोऽभिलापः ॥३॥

लोको विलोकयति मां स्वपतिप्रतीपां,
भावं न वेत्ति मम किञ्च पतिप्रियत्वम् ।
हा कान्त ते विरहतो महतो निशायां
को वेत्ति कोक मम शोकमृते भवन्तम् ॥४॥

स्वाम्येव सर्वमिति तत्पद एव नित्यं
लग्नात्मनां परमभावमुपागतानाम् ।

आनन्ददायकमपि प्रिय योगभाजां
सन्तापकं भवति मे दिवसावसानम् ॥५॥

अह्न्येव मे भवति ते प्रिय सङ्गलाभो
रात्रौ पुनर्विरहिता भवता वतास्ति ।
आलोक्यते कथमलौकिकरीतिरेषा
भाग्ये ममैव न च कस्यचिदन्यजन्तोः ॥६॥

निद्रा न मे भवति ते वत चिन्तयैव
रात्रिः क्षयं व्रजति हा सुभृशार्तनादैः ।
साहं प्रिय प्रतिनिशं भवता वियोज्य
दूरीकृतास्मि विधिना दिवसावसानात् ॥७॥

नक्तन्दिवं भवतु नौ प्रिय सङ्गरङ्गः
प्रेम प्रयातु दृढतां स्थिरतां च नित्यम् ।
मा भूत् त्वया मम मया तव चाप्ययोगो
दैवं प्रसीदतु—विधौ सुमुखे हि सिद्धिः ॥८॥

# कालिदास-वेदान्तदेशिकयोः सन्देशकाव्यविरचने तारतम्यम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—मद्रपुरीविश्वविद्यालये विमर्शनविभागे छात्रस्थानमधिरूढः टि. के. रामचन्द्रशर्मा ]

"विद्युदुन्मेषदृष्टिम्" इत्यत्र विद्युति दृष्टित्वारोपेण, "स्तनितवचनैः" इत्यत्र स्तनिते वचनत्वारोपेण च मेघस्य दर्शनभाषणादिशक्तत्वं सम्पादितम्। आकाशगामित्वाच्चरणानुपयोगेऽपि अनुकूलपवनस्यापेक्षितत्वादाह महाकविः "मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्" इति। अथ प्रकृतितत्त्वज्ञो महाकविः विन्ध्यासन्नदेशे कुत्रचित्पर्वतभूयिष्ठत्वाद्वातस्य किञ्चिदिव प्रतिकूलत्वं ज्ञात्वा मार्गभ्रंशपरिहाराय युक्तिमुपदिशति "तस्याः (नद्याः) ...तोयमादाय गच्छेः। अन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वाम्" इति। अपि चैकान्तस्थितपरस्त्रीप्रेक्षणसम्भाषणादिकृत्येषु गुणवतः सत्कुलप्रसूतस्य सकलत्रस्यैव यूनः[1] पुरुषस्य नियोगौचित्यात् "जातं वंशे भुवनविदिते पुष्करावर्तकानाम्......याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा" इत्यादिना मेघस्य सत्कुलप्रसूतत्वगुणवत्त्वसाधनम्, "खिन्नविद्युत्कलत्रः" इत्यादौ विद्युति कलत्रत्वारोपणम्, "विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे वक्तुं धीरः स्तनितवचनैर्मानिनीं प्रक्रमेथाः॥" इति यक्षकन्यासविधे सविद्युत्कलत्रस्यैव प्रवेशवर्णनं च कियतीमौचितीमावहन्तीति मौनेनैव व्याख्यातुं प्रभवामः।

अथ प्रायेण तावद्विरहवेदनाक्रान्तचित्ता यत्किञ्चित्स्वाभिमतमुक्त्वा कृत्वा वा बहुभिर्लोकन्यायैर्दृष्टान्तैश्च तत्समर्थयन्तीति सर्वसाधारणममुमर्थं

---

1 वृद्धवीतरागिणोस्त्वेकाकिनोर्नियोगे नानौचित्यम्।

समुचितस्थानेषु समीक्ष्य विनिवेशितैरर्थान्तरन्यासैर्निर्वहति महाकविर्मेघसन्देशे। तथा हि—आषाढप्रथमदिवसे मेघालोकसमुद्दीपितप्रियाविरहदुःखस्य दुःसहतां "मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे।" इत्यनेन, अचेतनस्य मेघस्य दूतकृत्ये नियोजनं "कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु" इत्यनेन, "अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे" इति न्यायेन अपरिचिते कदाचिदभ्यर्थनाभङ्गभिया तूष्णींभावस्योचितत्वेऽपि उत्तमपुरुषविषयाभ्यर्थनाभङ्गः सह्य एव, अधमविषयः खलु सः अनौचित्यमावहतीति "याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा" इत्यनेन, स्वकान्ताया विरहदुःखासहतया शङ्क्यमानस्यापि मरणस्यासम्भाव्यत्वं "आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि" इत्यनेन, तथा तत्र तत्र तांस्तानर्थविशेषान् "रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय", "स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु", "मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः", "ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः", "आपन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम्", "प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा",[1] "कान्तोदन्तः सुहृदुपनतः सङ्गमात्किञ्चिदूनः", "कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण", "प्रत्युक्तं हि प्रणयिषु सताम् ईप्सितार्थक्रियैव" इत्यादिभिर्मनोहरैः सुललितैः सन्दर्भानुगुणैरर्थान्तरन्यासैः समर्थयन् कविसार्वभौमः स्वस्यालङ्काराणां समीक्ष्यविनिवेशने अन्यादृशीं प्रतिभां प्रथयति। 'उपमा कालिदासस्य' इति लौकिकी प्रथा तद्विरचितनिखिलप्रबन्धसामान्याभिप्रायेण। मेघसन्देशमात्रमवलम्ब्य विचारे पुनः कविरुपमापेक्षया अर्थान्तरन्यासाभिमुखो दरीदृश्यते। युक्तं चैतत्। यतो दुरवगाहा अप्यर्थाः सदृशपदार्थान्तरोपन्यासपूर्वकं प्रबोध्यमानाः सुकुमारमतिभिरपि विनेयैरनतिप्रयासेन

---

1 आस्वादयन्तु सहृदयाः आर्द्रान्तरात्मेति पदप्रयोगोपलब्धां मधुभरीम्।

शीघ्रमेव हृदि व्यवस्थाप्यन्त इति पुमर्थप्राप्तिसाधनेषु रामायणरघुवंशादि-महाकाव्येषु त्रिवर्गोपायव्युत्पत्त्याधानार्थमुपवर्ण्यमाना अर्था ललिताभिरुपमाभिरनुगृहीता निबध्यन्ते महाकविभिर्वाल्मीकि-कालिदासप्रभृतिभिः।
सन्देशस्तु रामायणरघुवंशादिभ्योऽनेकधा भिद्यते। न ह्यत्र कस्यचिन्नायकस्य किञ्चित्प्रधानं कार्यमुद्दिश्य प्रवृत्तस्य विघ्नैरसकृत्प्रतिहन्यमानस्य सोपकरणस्यारम्भाद्यनेकावस्थान्तरात्मकं विशिष्टं विचित्रं चेतिवृत्तं विततवितत प्राधान्येनोपवर्ण्यते, येन विचित्रतरेतिवृत्तसङ्घटनसोत्साहनायकव्यापारादिवर्णनावशाद्भवेदुपमायाः प्राधान्यम्। अत्र खलु महाकाव्येषूपवर्ण्यमानासु विविधास्ववस्थासु एकामवस्थां पृथक्कृत्य तदवस्थापन्न-नायकचित्तवृत्तिवर्णनमेव मुख्यं वस्तु[1]। एतदानुगुण्येनान्येऽप्यर्था वर्ण्यन्त इत्यन्यदेतत्। विरहावस्थापन्ननायकचित्तवृत्तिवर्णनप्रधानत्वाच्चात्र तत्स्वभावानुरोधनार्थान्तरन्यासस्यैव प्राधान्यमुचितम्। न चैतावता उपमादिनिरपेक्षता। तेऽपि यथोचितमत्र निबध्यन्त एव। तथा च "वप्रक्रीडापरिणतगजप्रेक्षणीयम्", "भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य", "श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः", "जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा", "बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः", "प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः", "इन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्ति", "साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम्", "मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति" इत्येवमादावुपमायाः, "खिन्नविद्युत्कलत्रः", स्तनितवचनैः", "वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः", "दर्शितावर्तनाभेः", "स्रस्तगङ्गादुकूलां", "सलिलवसनं", "मुक्तरोधोनितम्बम्", "विद्युदुन्मेषदृष्टिं" इत्येवमादौ रूपकस्य;

---

1 'कश्चित्' इत्यनिर्ज्ञातविशेषं पुरुषं नायकत्वेन प्रकल्पयन् कालिदासः नात्रेतिवृत्तस्य प्राधान्यमिति सूचयति। अत एव न महाकाव्यत्वं सन्देशकाव्यस्य।

"मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः" "एकं मुक्ताफलमिव भुवः स्थूलमध्येन्द्रनीलम्", "शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम्" इत्येवमादावुत्प्रेक्षायाः ; तथा तत्र तत्रालङ्कारान्तराणामपि यथाप्रदेशं समीक्ष्यविनिवेशः परिदृश्यते। एवं समीक्ष्य विनिवेशितैरुपमाद्यलङ्कारैः, "जीविताललम्बनार्थी जीमूतेन" इत्येवमादावर्थानुरोधादपृथग्यत्ननिर्वर्त्यैरनुप्रासादिभिः, विरहिवचनोचितमन्दाक्रान्ता[1]वृत्तेन, शृङ्गाररसोचिताया अनतिपरुषवर्णरचनात्मिकाया उपनागरिकावृत्तेः, श्लेषादिगुणाश्लिष्टपदरचनात्मिकाया वैदर्भीरीतेः, असमासमध्यसमाससङ्घटनाया अतिसुन्दरव्यापारात्मिकायाः कैशिकीवृत्तेश्च समाश्रयणेन, तथा देवप्रकृतिकविरक्तनायकचित्तवृत्त्यनुगुणविभावानु-भावसात्त्विकव्यभिचारिवर्णनेन च प्रतिसन्दर्भं, प्रतिवाक्यं, प्रतिपदं, प्रतिवर्णं च विप्रलम्भशृङ्गारमभिव्यञ्जयदिदं काव्यं झटिति श्रोतृचित्तद्रुविकरणेन परां प्रीतिं व्युत्पत्तिं चादधातीत्यहो कविसार्वभौमस्यासाधारणी निखिलगुणोपेतसन्देशकाव्यरचनाचातुरी। इदमत्र प्रतिभाति—यत्कविकुलकोकिलः कालिदासः "प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः" इति प्रपञ्चयन्नपि समग्रगुणसम्पन्नपदार्थनिर्माणाभक्तत्वं दृष्ट्वा स्वयं कथञ्चित्तादृशपदार्थनिर्माणे प्रयतमानः सुदृढां फलप्राप्तिं मेघसन्देशेन प्रथयतीवेति।

अथ वेदान्तदेशिकः रामगिर्याश्रमस्थितविरहियक्षस्थाने माल्यवत्पर्वतस्थितं विरहिणं रामम्, अलकास्थितयक्षकन्यास्थाने रावणभवननिरुद्धां सीताम्, दौत्यकृत्यनियुक्तमेघस्थाने राजहंसं चाभिषिच्य विरहिवचनोचितमन्दाक्रान्तावृत्तेन हंससन्देशं विरचयन् बहुप्रकारेण कालिदासमनुकरोति। अत्र च कालिदासवदेव "तस्मिन्सीतागतिमनुगते तद्दुकूलाङ्कमूर्तौ तन्मञ्जीरप्रतिमनिनदे न्यस्तनिष्पन्ददृष्टिः। वीरश्चेतोविलयमगमत्...।" इत्यनेन

---

1 विरहिवचनस्य करुणाभूयिष्ठत्वाद् गुर्वक्षरप्रायं वृत्तं समुचितम्। तच्च विवृतमस्मद्विरचितायां नाट्यशास्त्रसमीक्षायाम् [ पृ-८३-८३ ]

सीतास्मरणकारिणो हंसस्य दर्शनेन चित्तविक्षेपस्य सम्भाव्यतां, "........ प्रणयपदवीं प्राप वार्तानभिज्ञो। विश्लेषेण क्षुभितमनसां मेघशैलद्रुमादौ याच्ञादैन्यं भवति किमुत क्वापि संवेदनार्हे ॥" इति दूतोपयुक्तपटूकरणादि-रहितस्य तत्कर्मणि नियोगौचित्यम्, "वेदोदन्वद्विभजनविदो वंशजं विश्वमूर्तेः" इत्यादिना प्रशस्तवंशजत्वम्, स्थाने दौत्यं तदपि भवतः संश्रित-त्राणहेतोर्विश्वस्रष्टा विधिरपि यतः सारथित्वेन तस्थौ ॥" प्रागप्येवं परिणतगुणां नैषधे वीक्ष्य वार्तामार्तत्राणं व्रतमिति विदुर्हंस शुद्धात्मनां वः ॥" इत्यादिना कथञ्चिद्दौत्यानङ्गीकारशङ्कानिराकरणं च सम्पादयति वेदान्तदेशिकः। चेतनस्य दूतकर्मणि नियोगाद्बहूनां चेतनधर्माणामारोपेण सम्पादनप्रयासो नास्त्यत्र। अथापि 'प्रणयपदवीं प्राप वार्तानभिज्ञो' इत्यनेन केषाञ्चिद्दूतोपयुक्तपटुकरणानामभावस्योक्तत्वात् तानि यथासन्दर्भमारोपेणैव सम्पादनीयानि। अत्र वेदान्तदेशिको न प्रभवति। न खलु सीतासम्भा-षणसमयेऽपि हंसरुते स्पष्टवाक्त्वमारोपितम्। मेघसन्देशे धीर-साधु-जीमूता-म्बुवाहादिशब्दैर्ये दूतोपयुक्तधैर्यनैपुण्यादयो धर्मा वर्णिता न तेषां प्रतिपादनं हंससन्देशे दृश्यते। अपि च कामिनः खलु सर्वान्कामिनो मन्यन्ते। स्मरन्ति च विशेषेण विरहाद्यवस्थासु स्वचित्तवृत्त्यनुगुणानेव पदार्थान्; न तु सर्वानपि। अतश्च विरहावस्थापन्नरामचित्तवृत्त्यनुगुणं हंसे विविध-कामिधर्मारोपणम्, मार्गे तदनुगुणविभावादीनां प्राधान्येन वर्णनं च समुचि-तम्। अङ्गतया पुनरन्येषां वर्णनमित्यन्यदेतत्। अत्र पुनर्हंससन्देशे हंसे कामिधर्मारोपणं किञ्चिदिव कृत्वा बाहुल्येन भक्तिरसानुगुणानां

1 विश्वस्रष्टृत्वात्पितृतुल्यस्य विधेः शरणागतरक्षणार्थं युक्तं सारथ्यङ्गीकर-णम्। हंसेन तु दौत्यं किमर्थमङ्गीकार्यमिति प्रश्नस्य नास्ति समीचीनमत्रोत्तरम्। प्रागप्येवं...इत्यादिश्लोकः हंससन्देशान्ते निवेशितः, पूर्वमेव निवेशितश्चेत् सम्यक् स्यात्। अत एव कथञ्चिदित्युक्तम्। कालिदासेन यथालौचित्यं परिरक्षितं तत्प्राक् प्रदर्शितम्।

विविधविष्णुक्षेत्रादिगमनसेवादीनामेव प्रतिपादनं दृश्यते। अथ ब्रूयात् कश्चित्—भक्तो वेदान्तदेशिकः स्वगतविष्णुभक्तिप्रकटनार्थं तत्प्रधानमेव काव्यं व्यररचत् इति। अहो! एवं तर्हि किमिति विरहदूयमानराममुखेन स्वभक्तिं प्रकटयति। आत्मानमेव सन्देशप्रेषकत्वेन कुतो न कल्पयति। अथवा गोपिकां काञ्चन नायिकात्वेन स्वीकृत्य प्रेषणं हंसस्यान्यस्य वा कृष्णं प्रति युक्तरूपं मन्यामहे। तथा च कृतं भक्तशिखामणिना रूपगोस्वामिना, यत्र भक्त्यनुगुणा भावा वर्ण्यमानाः नितरामौचित्यमावहन्ति। विरहदशापन्ननायककर्तृकत्वे सन्देशस्य तच्चित्तवृत्त्यनुगुणा एव भावा वर्णनीयाः। न च रामस्य सीतायां भक्तिः अपि तु रतिरेवेति विप्रलम्भानुगुणानामेव भावानां हंससन्देशे प्राधान्येन वर्णनमुचितम्। तत्तु न कृतं देशिकेनेति परं विषादस्थानम्।

अथ सरस उत्पतनसमये, मार्गमध्ये सीतासमीपगमने वा न हंसस्य हंसीसाहित्यमुपवर्णितमित्यपरमिदमनौचित्यम्। तथाह्यादौ तावद्धंसस्यैकाकिनो दूतकृत्यनिर्वाहाय दूरदेशगमने सहचरीविरहः, कालिदासः कदाचिदपि नानुमन्येत "मा भूदेवं क्षणमपि च ते विद्युता [1]विप्रयोगः इति ब्रुवन्। देशिकोऽपि हंससन्देशान्ते "सर्वाकारैस्त्वदनुगुणया सेवितो राजहंस्या" इति ब्रुवन् कालिदासमनुकर्तुमिच्छति ; परं तु पूर्वं तदनिर्वाहादेवात्रानौचित्यम्। किमेतावत्पर्यन्तं यत्र कुत्रापि स्थिता राजहंसी सीतां प्रति हंसेन रामसन्देशश्रावणानन्तरं याहच्छिकलब्धसमागमा लङ्कायाम्? आहोस्वित् अन्तिमवाक्यपर्यालोचनया मार्गमध्येऽपि सहचरीयोगः समुन्नेयः? इदं खलु युक्तिकुशलानां तार्किकाणामेव सुमनोहरं, न सहृदयानाम्। सहृदयाः खलु मध्ये मध्ये ससन्दर्भं तन्निर्देशपूर्वकं निर्वाहे सत्येव प्रीयन्ते, न सकृदुच्चारणमात्रेण। अपि च "प्रक्षीणां त्वद्विरहसमये

1 नात्राविप्रयोग इति छेदः, "खिन्नविद्युत्कलत्रः", इत्यादिना पूर्वं वर्णितेन विरोधापत्तेः।

जातहर्षामिदानीं प्रत्यायास्यन्ननुनय शनैः पद्मिनीं स्वानुवाचा", "सर्वाकारैस्त्वदनुगुणया सेवितो राजहंस्या" इत्यादिवर्णनाद्विषयासक्तचित्तस्य बहुकलत्रस्य चैकाकिनः कान्तावियुक्तस्य एकान्तस्थितापरिचितपरयुवतिसमीपगमनसम्भाषणादिकमुपवर्ण्यमानं नितरां सुचेतसां मनो दूनयति। यत एवंविधेषु[1] कृत्येषु वीतरागिणो निगृहीतचित्ता ब्रह्मचारिणः, सकलत्रा वा पुरुषाः प्रेषिताः प्रेष्यमाणाश्च दृश्यन्ते। तथा च रामायणे ब्रह्मचारिणो हनूमतो महता प्रपञ्चेन निगृहीतमानसत्वं वर्णयति वाल्मीकिः—

"मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने।
शुभाशुभाद्यवस्थासु तच्च मे सुव्यवस्थितम्।"

इत्यादिभिः। कालिदासोऽपि मेघं सविद्युत्कलत्रमेव प्रेषयति; वेदान्तदेशिकेनाय' लोकन्यायो विस्मृतः। अथ ब्रूयात्—रामस्त्वलौकिकः पुरुषः परमेश्वरः, सीता च परमेश्वरी, तद्विषये च लोकसम्प्रदायप्रवृत्तमिदमौचित्यमनादृतमपि न दोषायेति। अहो! एवं तर्हि सर्वेश्वरत्वात्सर्वज्ञत्वात्सन्देशप्रेषणमेवानुपपन्नम्। अथ परमेश्वरस्यापि लीलागृहीतमानुषविग्रहस्य लोकानुरोधादियं प्रवृत्तिः, तदा लोकानुरोधादेव तत्तदौचित्यमपि परिरक्षणीयमित्यन्यदेतत्। प्रकृतमनुसरामः।

अलङ्कारागां समीक्ष्य विनिवेशनेऽपि न कालिदासवद्वेदान्तदेशिकस्य नैपुण्यं परिदृश्यते। कालिदासो ह्युपमाप्रियोऽपि सन्दर्भानुगुण्येनार्थान्तरन्यासस्य प्राधान्यं विदधाति मेघसन्देशे। देशिकस्तु न केवलमस्मिन्विषये सूक्ष्मदृष्टिं न निबध्नाति, प्रत्युतानुभवविरुद्धमप्यर्थं कुत्रचिद्वर्णयति "कान्ताश्लेषादधिकसुखदः कामिनां दूतलाभः" इत्यादौ। दूतलाभस्य कान्ताश्लेषाधिकसुखदत्वमागमसहस्रबोधितुमपि सहृदयहृदयं नाधिरोढुम् ईष्टे, किमुत देशिकप्रबोधितम्। एतत्समानाकारमेव तत्त्वं कालिदासः प्रकारान्तरेण बोधयति "कान्तोदन्तः सुहृदुपनतः सङ्गमात्किञ्चिदूनः" इति। अत्रोभयोस्तारतम्यं सहृदया एव विवेचयन्तु। अथान्यत्र वेदान्त-

1 एवंविधदूरदेशगमनादौ दूतीवृद्धादयो न समर्था इति युवैव प्रेषणीयः।

देशिकोऽपि—'किं न स्त्रीणां जनयति मुदं कान्तवार्तागमोऽपि[1]", "पत्युश्छन्दाद्व्यसनमपि हि श्लाघनीयं वधूनाम्", इत्याद्यर्थान्तरन्यासान्निवेशयन्नपि न कालिदासवदुन्मत्तचित्तवृत्त्यनुगुणं तस्य प्राधान्यं निबध्नाति।

अथ कालिदासो रामगिर्याश्रमादलकाया बहुषु मार्गेषु विद्यमानेष्वपि यो मार्गो विरहदूयमाने मनसि झटिति प्रतिभासेतोद्दीपकत्वात् तमेव मार्गं विप्रलम्भोचितविभावरूपं सज्जनोचितपुण्यक्षेत्रतीर्थादियुक्तं च मेघायोपदिशति—"मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं" इत्यादिना। अन्ये मार्गा विरहिसन्देशवाहकस्य सत्कुलप्रसूतत्वादिगुणविशिष्टस्य मेघस्य गमने न युक्ता इति भावः। कुत्रचिद्विप्रलम्भोचितविभावपरिपोषार्थमेव "वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां........" इत्यादिभिर्वक्रमार्गेणाप्युज्जयिनीगमनमुपदिशति कालिदासः। सर्वप्रकारेणाप्यलकासदृशी शृङ्गाराकरभूता उज्जयिनी कथमिव यक्षस्य स्मृतिपथं नावतरेदेवंविधायामवस्थायामिति वक्रमार्गगमनोपदेशोऽत्र नितान्तमौचित्यमावहति। इदमत्र तत्त्वम्—कामिनो विरहिणः दृष्टबहुदेशनगरगिरिनदीविपिनादयः, परिज्ञाततत्तद्देशीय-[2]प्रवृत्तिविशेषा अपि, तेषु तेषु ये स्वचित्तवृत्त्यनुगुणा देशादयः प्रवृत्तयो वा तानेव विरहाद्यवस्थासु संस्मरन्तीति तादृशदेशप्रवृत्त्यादीनामेव सन्देशकाव्येषु वर्णनमुचितं, न पुनः कविमतानुरोधप्रकल्पितानां येषां केषाञ्चिन्मार्गदेशादीनामिति। बहवस्तावदस्मिन्विषये मोमुह्यन्ति।

तथा हि—हंससन्देशे रामः हंसं सम्बोध्यादौ "स्थानैर्दिव्यैरुपचितगुणां चन्दनारण्यरम्यां मुक्तासूतिं मलयमरुतां मातरं दक्षिणाशाम्। अस्मत्प्रीत्यै जनकतनयाजीवितार्थं च गच्छन्......॥" इत्युक्त्वा पश्चात् "मार्गौ सम्यङ्मम हनुमता वर्णितौ द्वौ तयोस्ते सह्यासन्नोऽप्यनतिसुभगः पश्चिमो

---

1 कान्तवार्तागमस्य सामान्यप्रीतिजनकत्वमुक्तं न तावच्चमत्कारजनकम्, यावत्सङ्गमात्किञ्चिदूनः इति कथनेन।

2 प्रवृत्तिशब्देनात्र वेषभाषाचारादयो विवक्ष्यन्ते।

नित्यवर्षः ।" इति पूर्वमवश्यगन्तव्यत्वेनोक्तं विस्मृत्य चन्दनारण्यादियुक्त-पश्चिममार्गे दोषमुद्भाव्य पुनर्मार्गान्तरेण गमनमुपदिशति "प्राचीनेषु प्रतिजनपदं संहतावद्भुतानां मग्ना दृष्टिः कथमपि सखे मत्कृते ते निवार्या"[1] इत्यादिभिः। अत्र वर्णितेषु देशेषु न कुत्रापि चन्दनारण्यं दृश्यते। अपि च "संहतावद्भुतानाम्" इत्यद्भुतैकप्रधानोऽयं मार्गः कथं विरहदूयमानमानसस्य रामस्य स्मृतिपथमारूढः, परिहाप्य चन्दनारण्यमलयपर्वतादि-विविधशृङ्गारोद्दीपनविभावयुक्तं मार्गमिति शताधिकप्रबन्धप्रणेतार एव प्रष्टव्याः[2]। अथ नितान्तमभिमतः स्मृतिपथमारूढोऽपि स मार्गः परित्यक्तो नित्यवर्षत्वादिति चेत्, कष्टं, केनापि प्रतारितोऽयं देशिकः केरलो नित्य-वर्ष इति। न हि सह्याचलासन्नप्रदेशेषु [3]नित्यवर्षत्वमनुभूयते। नापि

---

1 अत्र वेदान्तदेशिकः "उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः कालक्षेपं...।...प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत्" इत्येतस्मिन् दृष्टं कालिदासाशयमनुकरोति।

2 अत्र हंसस्यौत्सुक्यजननायाद्भुतप्रधानमार्गोपदेश इत्यपि न युक्तम्। विषयासक्तानां कामिनामद्भुतापेक्षया शृङ्गारविभावैरेवौत्सुक्यमधिकं जायते। हंसः खलु विषयासक्तः कामीति प्राक् प्रदर्शितम्। युक्तं चैतद्यतः कामिनः कामिन एव सुहृदो मन्यन्ते। कालिदासोऽपि मेघसन्देशे कामिचित्तवृत्त्यनुगुणान्भावान्वर्णयन् जनयत्येव परमौत्सुक्यं मेघस्य।

3 नित्यशब्देनात्र बाहुल्यमेव विवक्षितम्, तच्चास्त्येव केरले इति नाशङ्कनीयम्। यतो बहुलवर्षत्वं न तन्मार्गपरित्यागोपदेशकारणं भवति। शरत्काले खलु रामो हंसं प्रेषयति। तदा च केरलापेक्षया पूर्वदिश्येव वर्षाधिक्यम्। ग्रीष्मर्तौ खलु पश्चिमदेशे वर्षाधिक्यं प्रसिद्धम्। शरत्काले तु पूर्वस्या दिशः पश्चिमां दिशं यदि कदाचिद्गच्छति मेघः तदैव तत्र वर्षः स्यात्। अतश्च यादृच्छिकोऽपि वर्षः शरदि पूर्वदिश्येव बाहुल्येन भवितुमर्हतीति हंसगमने पश्चिममार्गस्यैव युक्ततरत्वम्।

श्रुतपूर्वमिदम्। तत्तद्देशकालावस्थादीनां सम्यगपरिज्ञानान्महानयं दोष आपतितः। देशकालादितत्त्ववित्खलु कविर्भवति। देशकालादितत्त्वज्ञानं च तत्तद्देशधर्मादिबोधकग्रन्थपठनेन, तत्तद्देशगमनात्स्वयमनुभवेन च सञ्जायते। केवलग्रन्थपठनेन तत्तद्देशीयसामान्यधर्मविबोधेऽपि तात्कालिका धर्मविशेषाः स्वयमनुभवादेव सम्यक् ज्ञायन्त इत्युभयमपि सत्कवीनामवश्यं भावि। एवंविधोभयपरिज्ञानवन्तो विरला एव सन्तीत्यत एव "द्वित्राः पञ्चषा वा महाकवयः" इत्युच्यन्ते। ग्रन्थपरिशीलनमात्रसञ्जातविवेकास्तु मध्यमाः न विरुद्धानर्थानुपनिबध्नीयुः। देशिकस्त्वेतदुभयाभावादनाप्तवाक्यविश्वासाद्वा पश्चिममार्गस्य नित्यवर्षत्वमभापतेति तर्कयामः।

किञ्च यदि सह्याचलसन्निकृष्टं मार्गं परित्यज्य प्राचीनमेव मार्गं वर्णयितुं निर्णीतवांस्तर्हि किमर्थं 'चन्दनारण्यरम्या मलयमरुतां माता दक्षिणाशा त्वया गन्तव्या' इति हंसं प्रतारयति? सह्याचलासन्नप्रदेशेषु हि चन्दनारण्यं श्रुतपूर्वं दृष्टचरं चेत्यहो न केवलं देशकालतत्त्वानभिज्ञः, प्रत्युत पूर्वापरविरुद्धभाषणोऽपि देशिक इति महदिदं विषादस्थानम्।

अथोपवर्णितेऽपि प्राचीने मार्गे मध्ये मध्ये विद्यमानान् विरहिचित्ताधिरोहणोचितान्विप्रलम्भपोषकान् देशनगरतद्धर्मान्परित्यज्य बहून्, कांश्चिदेव किञ्चिदिव वर्णयित्वा, प्राधान्येन विष्णुक्षेत्रगमनाराधनादिकं वर्णयन् प्रकृतं रसं न यथावत्परिपोषयति। कालिदासस्तु मार्गमध्ये महाकालक्षेत्रगमनसरस्वतीतीर्थाभिगमादीन् वर्णयन्नपि प्रकृतं विप्रलम्भशृङ्गारमविच्छिन्नप्रवाहमुत्तरोत्तरमभिवर्धयतीति पश्यतोभयोरत्र वैलक्षण्यम्।

अथ कथं नैसर्गिकप्रतिभावतां बहुश्रुतानां शताधिकप्रबन्धप्रणेतॄणामपि देशिकाचार्याणाम् एवंविधानि स्खलितानि सम्भवन्तीति निपुणं विचार्यमाणे रागद्वेषौ मुख्यं कारणमिति हंससन्देशादेव प्रकाशते।

तथा हि —मार्गमध्ये नानाविधचित्रकर्मादिभिरुद्यानदीर्घिकादिभिश्च समलङ्कृतनानाविधराजभवनधनिकप्रासादादिभिः शोभमानानाम् अत्यन्तमनोहराणां शृङ्गारविभावत्वेन वर्णयितुमुचितानां विविधविलासगीतनृत्य-

वाद्यादिनिरन्तरावासभूतानां चोलपाण्ड्यादिराजधानीनां तञ्जामधुरादिनगराणां च विद्यमानत्वेऽपि शिवक्षेत्रमिति द्वेषात्तान्सर्वानपि परित्यज्याप्रसिद्धान कांश्चित्क्षेत्रादीन्वर्णयित्वा, हनूमदुत्पतनस्थानत्वेन प्रसिद्धं रामेश्वरक्षेत्रं ततोऽपि दक्षिणप्रान्ते विद्यमानं कन्याकुमारीक्षेत्रं वा विहाय मध्ये किञ्चिदप्रसिद्धं क्षेत्रं वणयति। तदिदं सर्वं शिवद्वेषाद्विष्णुपक्षपाताच्चेति हंससन्देशादेव स्पष्टमवगम्यते। अथ कथञ्चिच्छिवद्वेषप्रच्छादनार्थं कुत्रचिन्महादेवस्य वर्णनेऽपि अतिप्रसिद्धं मधुराक्षेत्रं परित्यज्य तस्यानतिदूरे विद्यमानमनतिप्रसिद्धं किञ्चिद्विष्णुक्षेत्रं "नित्यावासं वृषभमचलं सुन्दराख्यस्य विष्णोः" इत्यादिना वर्णयन विष्णुपक्षपातं, तथा तत्रैव "यस्योत्सङ्गे वलिविजयिनस्तस्य मञ्जीरवान्तं पाथो दिव्यं पशुपतिजटास्पर्शशून्यं विभाति" इत्यनेन स्वहृत्स्थितं शिवद्वेषं च प्रथयति। न हि पुराणेष्वितिहासेषु वा भुवि हरजटास्पर्शशून्यविष्णुपादोदकसत्त्वं तत्प्राशस्त्यं वा श्रुतपूर्वमिति केवलशिवद्वेषादेव देशिकेनेत्थं वर्णितमिति प्रतिभाति। अपि च रामस्य "अत्र पूर्वं महादेवः प्रसादमकरोत्प्रभुः। भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः इत्यादिना दर्शितशिवभक्तेर्वचनत्वेनेत्थं वर्णनं परामनौचितीमावहति। न हि कविहृदयेषु विद्यमाना अपि रागद्वेषादयस्तन्निबद्धवक्तृष्वारोपयितव्याः, विशेषतः प्रख्यातेषु। तथा करणे हि न केवलं स्वकीर्तिप्रणाशः, प्रत्युत विनेयानामपि विपरीतबुद्धिजननाद् महान् दोषः। अथ सुमनोहरपश्चिममार्गपरित्यागेन सन्दर्भाननुगुणपूर्वमार्गस्वीकरणमपि स्वदेशाभिमानादेव। एवं रागद्वेषकलुषितेन कविना विस्तृमरापि स्वप्रतिभा सङ्कोचितेति नितान्तं शोचनीयमेतत्।

अथेदमत्र निवेद्यते। वेदपुराणादिभ्यः कर्तव्याकर्तव्यविवेकप्रदेभ्योऽव्युत्पन्नानामायासभीरुत्वात्तत्परिशीलनेऽप्रवृत्तानां सुकुमारमतीनां व्युत्पत्त्याधानाय वेदशास्त्रपुराणादिप्रतिपाद्याः सर्वैरप्यवश्यं ज्ञातव्या अर्थाः सरसतया काव्येषु निबध्यन्ते सत्कविभिः, येन लोकोपकारात्कवीनां, व्युत्पत्त्या विनेयानां च भवति निःश्रेयसाधिगम इति प्रसिद्धम्। एवंविध-

प्रयोजनजननाय च काव्येपु प्रकृत्याद्यौचित्येन देशकालवयोवस्थादीनामविरोधेन वर्णनमवश्यं भावि। औचित्यं खलु रसोपनिषदिति सर्वसम्मतम्। तद्ध्वंसे पुनर्न रसस्यापि स्फूर्तिरिति काव्यत्वमेव विहतं स्यात्। अतश्चौचित्यसंरक्षणे कविभिरवधानवद्भिर्भाव्यमिति।

किञ्चान्यद् मेघसन्देशस्य सर्वातिशायि प्रकर्षजनकं, यत्कविसार्वभौमः सर्वैरपि विशिष्य ज्ञातव्यान् सामान्यकविभिरुल्लिखितुमप्यशक्यान् भौतिकशास्त्रसम्बद्धान् स्वयमनुभूतानुल्लिखितांश्च प्रकृतरसानुगुणानेव सरसतया यथातत्त्वं प्रतिपादयति; येषां परिज्ञानं विषयगौरवाद्यथार्थत्वाच्चाधुनिका भौतिकशास्त्रपरिशीलिनः अतिप्रयत्नेनापि सम्पादयितुं प्रयतन्ते। अस्मिन्विषये कालिदासस्य सर्वोत्कृष्टत्वं, न केवलं मेघसन्देशे यावद्रघुवंशशाकुन्तलादिष्वपि प्रकाशते। बहवः कवय एवंविधार्थनिबन्धने असमर्था एव दृश्यन्ते, न केवलं वेदान्तदेशिकः।

अपि चोत्पाद्येतिवृत्तनिबन्धने तदुन्मुखस्य कवेर्मनः कदाचिदतिभारवशाद्रसविषयादौचित्यात्प्रच्यवेतेति भिया इतिवृत्तस्य प्रबन्धप्रख्यातविषयत्वं प्रख्यातोदात्तनायकत्वं च महाकाव्यनाटकादिपूपदिष्टं भरतादिभिः। वेदान्तदेशिकस्तु प्रयत्नपूर्वं रसौचित्यपरिहारायैव प्रख्यातं रामचन्द्रं सन्देशकाव्ये नायकत्वेन स्वीचकार। अन्यस्य कस्यचिन्नायकत्वे पूर्वोक्तेषु दोषेषु केषाञ्चित्परिहारः सम्भवेदपि।

तदित्थं काव्यज्ञसमयमनुरुध्य विचारे दृश्यन्ते बहवो दोषा हंससन्देशे। सन्ति चात्रापि रमणीया भागाः सहृदयैः स्वयमनुभवितुं शक्याः। मेघसन्देशमवलम्ब्य तारतम्यविचारे तस्य न्यूनत्वमित्येतावदेवैयता विचारेण प्रदर्शितम्, न तु सर्वथा तत्काव्यं वर्जनीयमिति शम्।

# कमलाकान्तस्य पत्रपेटिका*

[ अनुवादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः, एम. ए. ]

अनेके किल कमलाकान्तम् उन्मत्तमभाषन्त। स कदा किं वाऽवदत् किं वाऽकरोत् तस्य कोऽपि नियमो नासीत्। न खलु तेन नाधिगता विद्या। किञ्चिदाङ्ग्लं किञ्चित् संस्कृतं च व्यजानादेवासौ। यया पुनर्विद्यया नोपार्जितं द्रविणं का वा सा विद्या। परमार्थस्त्वयमेव यत् आङ्ग्लादीनां सविधे गमनागमनम् अपेक्ष्यते इति। कति वा मूर्खमणयः कथञ्चिन्नामनिवेशनमात्रपटवः, तैः स्वायत्तीकृतम् अग्रहारादिकम्। मम मतेन त एव पण्डिताः। कमलाकान्तसदृशाश्च विद्वांसः यैः केवलं कतिचिद् ग्रन्था एवाधीताः, ते हि मम मतेन मूर्खरूपा एव।

कमलाकान्तेनापि कदाचित् लब्धं किमपि पदम्। कश्चनाङ्ग्लः कमलाकान्तस्य आङ्ग्लभाषणम् उपश्रुत्य तं समाहूय लेखकपदं प्रादात्। परं नालमासीत् कमलाकान्तः पदं परिरक्षितुम्। स हि कार्यस्थानं गत्वा नैवाकरोत् अशून्यं स्वं नियोगम् परं प्रभोः पुस्तकेषु पद्यानि व्यलिखत्, तत्रत्येषु च पत्रादिषु शेक्सपीयारो नाम वर्तते किल कश्चन लेखकः तस्यैव वचनानि समुद्धृतवान्, आदानपत्रस्तवकेषु च चित्राण्यङ्कितवान्। एकदा प्रभुस्तं मासान्तीयवेतननिर्देशपत्रलेखनाय तत्र समादिशत्। कमलाकान्तः 'बिल'पुस्तकं गृहीत्वा तत्र चित्रं विन्यस्तवान्— कतिचित् निष्किञ्चना नागा अध्यक्षं भिक्षां याचन्त इति। आङ्ग्लोऽसौ नवीनं वेतनपत्रजातं कारयित्वा कमलाकान्तमक्षुण्णमानं व्यसर्जयत्।

---

* स्वर्गत-कविसार्वभौम-वङ्किमचन्द्रचट्टोपाध्यायस्य कृतेर्वङ्गभाषामयस्य 'कमलाकान्तेर दप्तर' इत्याख्यसुप्रसिद्धकथाकाव्यस्यानुवादरूपा।

अयम् एवावधिः कमलाकान्तस्य सेवावृत्तेः। अर्थस्यापि विशेषतोऽपेक्षा नासीत्। कमलाकान्तेन कदाचिद् दारा न परिगृहीता इति। यत्र कुत्रापि किञ्चिद् अन्नम् अर्द्धतोलकमितं च अहिफेनम् एव पर्याप्तम्। यत्र क्वापि शेते स्म। सुचिरं ममैव गृहेषु न्युषितं तेन। उन्मत्त इति सम्यगुपचरितोऽसौ मया। परम् अहमपि नैव प्राभवं तं रक्षितुम्। स हि न क्वापि स्थेमानम् अबध्नात्। एकदा प्रातरुत्थाय ब्रह्मचारीव गैरिकं वसनम् आस्थाय क्वापि गतः। क्व गतः, न पुनरधिगतोऽसौ मया। न खल्वद्यावधि प्रत्यावर्तिष्ट।

आसीत्तस्यैका पत्रपेटिका। स छिन्नपत्रदर्शम् अगृह्णात्, दर्शनमात्रत एव तत्र यत् किमपि न्यवेशयत, तत् पुनरशक्यमेवावबोद्धुम्। अन्तरान्तरा च वाचयित्वा माम् अश्रावयत्, श्रवणेन च मे प्रादुरभूत् स्वापः। पत्राणि च कस्मिंश्चित् मसीचित्रिते पुरातने कर्पटे विनिबद्धान्यासन्। गमिष्यंश्च कमलाकान्तः प्रादात् मह्यं तां पत्रपेटिकाम्। अवदच्च माम् प्रसादीकरोमीदं त इति।

किं वा कुर्यामहमनेनानर्घ्येण रत्नेन। प्रथमतस्तावत् मनस्यकरवम्, भगवते वैश्वानराय उपायनीकुर्याम्। ततश्च लोकहितैषिता बलीयस्त्वमुपजगाम मम मानसे। अचिन्तयं चाहम्, किं वा तेन जातेन यो नोपकरोति जनानाम्। अस्यां खलु पेटिकायां वर्ततेऽनिद्रायाः पटुतमं भेषजम्। य एव वाचयति तस्यैव समुपनमेत् स्वापः। ये तावदनिद्रारोगेणाक्रान्तास्तेषाम् उपकाराय कमलाकान्तस्य प्रबन्धानां प्रसारे प्रवृत्तोऽस्मि।

श्रीभीष्मदेवखोशनवीशः

( क्रमशः )

# धर्मपत्नी

[ निबन्धकः—श्रीक्षितीशचन्द्रचट्टोपाध्यायः, एम. ए. ]

प्रियपाठकमहाभागाः ! सहस्रशः खलु श्रुतिपथम् आपतितः स्याद् भवतां धर्मपत्नीशब्दः। रामायण-महाभारतपुराणादिषु शास्त्रेषु काव्येषु च सर्वत्रैवासौ देदीप्यते। तथापि वेदाभ्यासजडा वैयाकरणा आदि-रसैकशरणाश्चालङ्कारिकाः शब्दस्यास्य साधुत्वे संशयमाविष्कुर्वन्ति। तथाहि धर्मपत्नीत्यत्र चतुर्थीतत्पुरुषः स्फुट एव। स च न सिध्यति। भगवता किल पाणिनिना "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" इति प्राणायि चतुर्थीसमाससूत्रम्। तत्र तदर्थेत्यनेनैव सिद्धे बलिरक्षितपदयो-रुपादानं ज्ञापयति न खलु तदर्थमात्र एव चतुर्थी समस्यते, अपि तु प्रकृतिविकृतिभावात्मक एव तादर्थ्ये चतुर्थीसमास इष्यते, अत एव च 'कुबेर-बलिः' 'गोरक्षितम्' इत्यादिषु तथाविधतादर्थ्यस्याप्रसङ्गात् पृथक्तया बलिरक्षितग्रहणम् उपपद्यते। किञ्च "पत्युर्नो यज्ञसंयोगे" इति सूत्रेण विस्पष्टमेव यज्ञसंयोगार्थे ङीप्-नकारयोर्विहितत्वेऽपि, यज्ञस्य च धर्मतोऽ-नन्यत्वेऽपि धर्मशब्दस्य पृथगुपादानं व्यक्तम् एव पौनरुक्त्यम् आवहति। न खलु चर्वितम् एव सञ्चर्व्यमाणं कमपि रसं नाम पुष्णाति। न हि सोपानत्के पादे पुनरप्युपानहं प्रतिमुञ्चति।

अत्र प्रथमतस्तावदिदमेव वक्तव्यं यद् वैयाकरणकुलचूडामणिना सूत्रा-ण्येव विरचितानि, न च तानि व्याख्यातानि न वा तेषाम् उदाहरणा-न्युपन्यस्तानि। व्याख्यातृभिरेव तत्र तत्र स्वमनीषिकया ज्ञापकान्याविर्भा-व्यन्ते। महर्षिणा स्वप्नेऽप्यसम्भाविता अर्था महर्षेरभिमतत्वेन प्रति-पाद्यन्ते। यद्यत्र चतुर्थीसमासोऽनुपपन्नः, तर्हि किमिति धर्मनियम इत्यत्र धर्माय नियमो धर्मनियमः, वृत्तिसमवाय इत्यत्र वृत्तये समवायः वृत्तिसमवाय इति वदद्भिर्भाष्यकृद्भिः प्रथमम् एव चतुर्थ्या विग्रहः प्रदर्शितः, किमिति च

मीमांसाभाष्यकारैः धर्माय जिज्ञासा धर्मजिज्ञासा इति व्याख्यातं धर्मजिज्ञासा-पदम् ? कामम् अत्र कैयटेनोक्तम्—चतुर्थ्या तादर्थ्यमात्रं प्रतिपाद्यते। सम्बन्धसामान्ये तु षष्ठीं विधाय समासः कर्तव्यः, चतुर्थीसमासस्य प्रकृति-विकृतिभाव एव विधानात्। सर्वतन्त्रस्वतन्त्रधिषणैः कुमारिलभट्टैश्च प्रतिपादितम्—

प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यर्थे समस्यते।
तादर्थ्ये यूपदार्वादौ तेनास्मिन्न समासता ॥
सा हि तस्येत्यनेनोक्तो धर्मस्येत्येष विग्रहः।
धर्मायेति तु तादर्थ्ये षष्ठी वृत्तेति कथ्यते ॥
प्राप्नोत्यत्र चतुर्थ्येव विशेषश्चेद् विवक्षितः।
सामान्यस्य विवक्षायां तादृशः कथ्यते कथम् ॥
सम्बन्धमात्र एवैषा षष्ठ्युत्पन्ना तथैव तु।
विशिष्टनिष्ठता तस्य भाष्यकारेण वर्ण्यते ॥

तथापि तत् सर्वं व्याख्यातॄणाम् अनुरोधेनेति बोद्धव्यम्। अत्र चतुर्थी-समासः पाणिनेरिष्ट इति स्पष्टमेवोल्लिखितं सहृदयशिरोमणिभिरप्पयदीक्षितैः १।१।१ सूत्रीयभामतीव्याख्याने—

पाणिनिः किल चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः इति तादर्थ्यसमासं सस्मार। चतुर्थ्यन्तः शब्दस्तदर्थवचनादिभिः शब्दैः समस्यते। चतुर्थ्यन्त-शब्दार्थस्तच्छब्देन परामृश्यते तस्मै इदं तदर्थम्। यथा कुण्डलाय हिरण्यम् इत्यत्र कुण्डलं चतुर्थ्यन्तशब्दार्थः, तच्छेषो हिरण्यम्, तत्र कुण्डल-शब्दश्चतुर्थ्यन्तः कुण्डलशेषवाचिना हिरण्यशब्देन समस्यते—कुण्डल-हिरण्यमिति। ततोऽर्थशब्दादिनापि ब्राह्मणार्थं पय इत्यादि द्रष्टव्यम्। कात्यायनेन अयं समासः प्रकृतिविकृत्योर्नियमितः, चतुर्थी तदर्थमात्रेणेति चेत्, तर्हि सर्वत्र प्रसङ्गोऽविशेषात्, प्रकृतिविकृत्योरिति चेत् अश्वघासादीनाम् उपसंख्यानम् इति। ( क्रमशः )

# स्त्रीधर्मः

( पूर्वानुवृत्तः )

[निबन्धकः—श्रीगोपालकृष्णवेदान्ताचार्यः, एम. ए.]

तत्र द्वितीयविवाहे यद् दृष्टफलं सम्भोगादिकं तदैहिकमेव। अदृष्टमिति धर्मादिकं पारलौकिकमित्यर्थः। व्याध्यादियुक्तेऽपि स्वामिनि प्रतिकूलचारिण्याः स्त्रिया असद्गतिमाह स एव यथा—

दरिद्रं व्याधितञ्चैव भर्तारं याऽवमन्यते।

शुनी गृध्री च मकरी जायते सा पुनः पुनः ॥ इति।

मनुरप्याह यथा—

पतिं हित्वाऽपकृष्टं स्वमुत्कृष्टं या निषेवते।

निन्द्यैव सा भवेल्लोके परपूर्वेति चोच्यते।

व्यभिचारात् तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम्।

श्रृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥ इति।

अधमस्त्रीणामरक्षितत्वमाह मनुर्यथा—

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकामिभिः।

आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः ॥ इति।

अस्यार्थः आप्तकामिभिः पुरुषैर्गृहे रुद्धा अपि स्त्रियोऽरक्षिता रक्षितुमशक्या एव भवन्ति। यास्तु स्वयमेवात्मानं रक्षेयुस्ता एव रक्षिता भवन्तीति। आसां दोषानाह यथा—

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्।

स्वप्नोऽन्यगेहवासश्च नारीसंदूषणानि षडिति।

अत्र पानं मद्यपानम्। अटनमापानभूमिषु देवतायतनेष्विति मेधातिथिः। स्वप्नोऽकालस्वाप इति भट्टः। चरित्रञ्चासां निरूपयति मनुरेव यथा—

नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः ।
सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ॥
पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः ।
रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥

तथाऽन्यत्रापि—

स्वभाव एष नारीणां नराणामिह दूषणम् ।
अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः ॥ इति ।

अत एवासां रक्षणे यत्नः सर्वथा विधातव्य इत्याह मनुर्यथा—

एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम् ।
परमं यत्नमातिष्ठेत् पुरुषो रक्षणं प्रति ॥ इति ।

कथमेता रक्षिता भवन्तीति चेद् बाल्यादिसर्वावस्थास्वेवासां विहार-विलासादिष्वस्वातन्त्र्यमेव रक्षणम् । यथाह मनुः—बालया वा युवत्या वा इत्यादि ।

याज्ञवल्क्योऽप्याह यथा—

रक्षेत् कन्यां पिता विन्नां पतिः पुत्रास्तु वार्द्धके ।
अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित् स्त्रियाः ।
पितृमातृसुतभ्रातृस्वश्रूश्वशुरमातुलैः ।
हीना न स्याद् विना भर्त्रा गर्हणीयाऽन्यथा भवेत् ॥ इति ।

आसामुपनयनसंस्काराभावेऽपि पतिसेवया गृहकर्मपरिचरणेन च तत्-फलं भवत्येवेत्याह मनुर्यथा—

वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः ।
पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रियेति ।

अस्यायमर्थः—स्त्रीणां विवाहविधिरेव उपनयनसंस्कारस्थानीयः । आसां पतिसेवैव वेदाध्ययनस्थानीया, तथा गृहार्थः गृहकृत्यान्येव अग्नि-परिक्रिया सायंप्रातर्होमस्थानीय इत्यर्थः । आसां गृहकृत्यान्याह स एव यथा—

सदा प्रहृष्टया भाव्यं गृहकार्येषु दक्षया।

सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया।

उपस्करो गृहोपयोगिभाण्डम्। तत् सुसंस्कृत' शोभावत् कर्तव्यमित्यर्थः। अपरमपि—

अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्।

शौचे धर्मेऽन्नपक्त्याञ्च परिणाह्यस्य वेक्षणे॥ इति।

अत्रायमर्थः—अर्थस्य धनस्य संग्रहः संख्यादिना परिच्छिद्य रक्षार्थं गृहे स्थापनम्, तथा व्यये विनियोगे। शौचे गृहद्रव्यपरिशुद्धौ भूमिलेपनादौ च। धर्मे पञ्चमहायज्ञोपयोगिद्रव्यादिनियमने। अन्नपक्त्यामन्नपाके। परिणाह्यस्य शय्यासनादिगृहोपकरणस्यावेक्षणे नियोक्तव्येत्यर्थः। याज्ञवल्क्य आह यथा—

"संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी। कुर्याच्छ्वशुरयोः पादवन्दनं भर्तृतत्परे"ति। पत्युरनुकूलचारिणी स्त्री स्वजनैः सर्वथैवाभरणादिभिस्तर्पणीया यतस्तादृश्या उत्पीडनेन परितापादिदानेन च महान् दोषो जायत इत्याह मनुर्यथा "पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा। पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः॥ यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः। यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः। शोचन्ति जामयो यत्र विनश्यत्याशु तत् कुलम्। न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा। जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः। तानि कृत्याहतानीव विनश्यन्ति समन्ततः। सन्तुष्टो भार्यया भर्त्ता भर्त्रा भार्या तथैव च। यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवमि"त्यादि। जामयो भगिनी-पत्नी-दुहितृ-स्नुषाद्याः। कृत्या आभिचारिकी क्रिया, तया हतानीति। पत्युरनुकूला स्त्री न केवलं धर्मकर्मण्येव सहायतां निवर्तयति परन्तु तस्यामुत्पादितेन पुत्रेण तस्यात्मनस्तत्पितॄणाञ्च स्वर्गाद्युत्तमा गतिश्च जायत इत्याह यथा—"पतिर्भार्यां सम्प्रविश्य गर्भो भूत्वेह जायते। जायायास्तद्धि जायात्वं यदस्यां जायते पुनः। उत्पादनमपत्यस्य जातस्य परिपालनम्। प्रत्यहं लोक-

यात्रायाः प्रत्यक्षं स्त्री निबन्धनम्। अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा। दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च हे"ति ॥ याज्ञवल्क्योऽप्याह—"लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः। यस्मात् तस्मात् स्त्रियः सेव्याः कर्त्तव्याश्च सुरक्षिता" इति। सहधर्मचारिणीमपि यदि कश्चिद् अदोषां त्यजेत् तदा तस्य महदेनो जायते इत्याह व्यासो यथा—"सद्वृत्तचारिणीं पत्नीं त्यक्त्वा पतति धर्मत" इति। अथ यदि पतिरुत्तमामपि पत्नीं त्यजेत् तदा तामशनवसनादिभिर्विभृयादन्यथा राजा तस्यै भरणोचितं स्वामिधनं विभज्य दापयेदित्याह याज्ञवल्क्यो यथा—"आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम्। त्यजन् दाप्यस्तृतीयांशम् अद्रव्यो भरणं स्त्रिया" इति। अत्रायमर्थः—यदि पतिरुक्तलक्षणान्वितां स्त्रियं त्यजेत् तदा राजा पतिधनात् तृतीयांशं तस्यै विभज्य दापयेत्। यदि पतिर्निर्धनः स्यात् तदा पतिधनात् तस्याः स्त्रिया भरणं स्वरक्षणोचितं धनं दापयेद् राजैवेति। विष्णुरप्याह—"निर्दोषां परित्यजन् पत्नीश्च चौरवद्दण्ड्य इत्यधिकारेणार्थः कर्त्तव्यः।" व्यभिचारिण्यपि नैव परित्यज्या इत्याह याज्ञवल्क्यो यथा "हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम्। परिभूतामधःशय्यां वासयेद् व्यभिचारिणीमि"ति। व्यासोऽप्याह यथा—"व्यभिचारेण दुष्टानां पत्नीनां दर्शनादृते। धिक्कृतायामवाच्यायामन्यत्र वासयेत् पतिरि"ति। अस्याः शुद्धिप्रकारमाह याज्ञवल्क्यो यथा—"व्यभिचारादृतौ शुद्धिरि"ति ऋतुदर्शने इत्यर्थः। व्यासोऽप्याह "पुनस्तामार्त्तवस्नातां पूर्ववद् व्यवहारयेदि"ति। अस्या व्यवहारस्तु प्राजापत्यप्रायश्चित्तानन्तरमेव। तथाचाहात्रिः "बलाद् धृता स्वयं वापि परप्रतारिता यदि। सकृद् भुक्ता तु या नारी प्राजापत्येन शुध्यती"ति। पराशरोऽप्याह "सकृद्भुक्ता तु या नारी नेच्छन्ती पापकर्मभिः। प्राजापत्येन शुध्येत ऋतुप्रस्रवणेन तु ॥" अत्र नेच्छन्तीत्यनेन स्वेच्छाकृतव्यभिचारे इति बोद्धव्यम्। बलात्कारेण यदि काचिद् भुक्ता स्यात् तदा तस्याः पुष्पकालेनैव शुद्धिरित्याहात्रिर्यथा "स्वयं विप्रतिपन्ना या यदि वा विप्रतारिता। बलान्नारी प्रभुक्ता वा चौरभुक्ता तथापि वा ॥

न त्याज्या दूषिता नारी न कामोऽस्या विधीयते। ऋतुकाल उपासीत पुष्पकालेन शुध्यती"ति। अत्रापि प्रायाश्चित्तमाह पराशरो यथा—"वन्दि-ग्राहेण या भुक्ता हत्वा वद्ध्वा बलाद् भयात्। कृत्वा सान्तपनं कृच्छ्रं शुध्येत् पराशरोऽब्रवीदि"ति। स्त्रीणां स्वभावतः शुद्धत्वादेवाकामतो बलाद् भुक्तानां प्रायश्चित्ताभावमाहात्रिः प्राग् "रजसा शुध्यते नारी"त्यादिवचनेन। केचित् त्वनेन परपुरुषोपभोगरूपमानसिकपापस्य शुद्धिर्भवति इत्याहुः। आसां निसर्गतः शुद्धत्वमाह याज्ञवल्क्यो यथा—"सोमः शौचं ददौ तासां गन्धर्वश्च शुभां गिरम्। पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यत" इति। अत्रिरप्याह यथा—"न स्त्री दूष्यति जारेण ब्राह्मणोऽवेदकर्मणा। नापो मूत्र-पुरीषाभ्यां नाग्निर्दहतिकर्मणा।" दहतिकर्मणा अपवित्रद्रव्यदाहेनेत्यर्थः। अत्रायमर्थः—स्त्री ब्राह्मणादयो जारावेदकर्मादिभिरपि न परित्याज्या भवन्ति। परन्त्वेषां प्रायश्चित्तादिसंस्कारेण परिशुद्धौ पुनर्व्यवहार्यत्वमेव जायत इति। कासां पुनस्त्याज्यत्वमिति चेत् तत्राह याज्ञवल्क्यो यथा "गर्भे त्यागो विधीयते" इति। अपरमपि—"गर्भभर्तृवधादौ च तथा महति पातके" इति। अत्र गर्भे यत् त्यागविधानं तदपि द्विजातिस्त्रियाः शूद्राद् गर्भे जाते इति मन्तव्यम्, वशिष्ठस्मृत्येकवाक्यत्वात्। तथाच वशिष्ठः—"ब्राह्मण-क्षत्रियविशां स्त्रियः शूद्रेण संगताः। अप्रजाता विनश्यन्ति प्रायश्चित्तेन नेतरा" इति। अत्र नेतरा इत्यनेनेतरासां प्रजातानां कृतप्रायश्चित्तानामपि त्याज्यत्वं प्रतीयते। शूद्रेण संगता इत्यनेन द्विजातिसंसर्गेण प्रजाताया अपि स्त्रियाः कृतप्राय-श्चित्ताया अत्याज्यत्वमित्यायाति। गर्भभर्तृवधादावित्यादि शिष्यगा-गुरु-गादिसंग्रहार्थमिति बोद्धव्यम्। तथाच वशिष्ठः—"चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा तथा। पतिघ्नी च विशेषेण जुङ्गितोपगता च ये"ति। जुङ्गितः प्रतिलोमजश्चाण्डालादिः। जुङ्गितोपगताया अपि पौनःपुन्ये-नोपभुक्ताया एव त्याज्यत्वम् अत्रिणा सकृद्भुक्तायाः प्रायश्चित्तविधानात्। तथाच "सकृद्भुक्ता तु या नारी म्लेच्छैर्वा पापकर्मभिः। प्राजापत्येन शुध्येत ऋतुप्रस्रवणेन त्वि"ति। गर्भे त्यागो विधीयत इति याज्ञवल्क्योक्त-

त्यागविधानञ्च स्वेच्छयोपगताया एवेति मन्तव्यम्। अन्यथात्रिणा विरोधः स्यात्। तथाचात्रिः "असवर्णैस्तु यो गर्भः स्त्रीणां योनौ निषेच्यते। अशुद्धा सा भवेन्नारी यावद् गर्भं न मुञ्चति। विमुक्ते तु ततः शल्ये रजश्चापि प्रदृश्यते। तदा सा शुध्यते नारी विमलं काञ्चनं यथे"ति। अत्रासवर्णैरिति द्विजातिशूद्रसाधरण्याद् याज्ञवल्क्यवचनं सकामाविषयम् अत्रिवचनं त्वकामाविषयमिति सर्वं समञ्जसम्। यत्तु बृहस्पतिः "हीनवर्णो-पभुक्ता या त्याज्या वध्यापि वा भवेदि"ति तद् बहुकालं हीनवर्णोपभुक्ताया-स्तज्जातित्वमापन्नाया एव, पराशरेणापि तथा विधानात्। तथा च परा-शरः—ब्राह्मणी तु यदा गच्छेत् परपुंसा विवर्जिता। गत्वा पुंसां शतं याति त्यजेयुस्तान्तु गोत्रिणः। पुंसो यदि गृहं गच्छेत् तदशुद्धं गृहं भवेदि"ति। अलं विस्तरेण।

उत्तमा स्त्री पत्यौ देशान्तरं गते यादृग्वृत्तिवती भवेत्। तदाह व्यासो यथा—"विवर्णा दीनवदना देहसंस्कारवर्जिता। पतिव्रता निराहारा शोच्यते प्रोषिते पताव"ति। निराहारेति नञोऽल्पार्थकत्वम्। अनुदरा कन्येतिवत्। अथ सहधर्मचारिणीनां नित्यनैमित्तिककर्माण्याह व्यासस्तत्र नित्यकर्म यथा—"पत्युः पूर्वं समुत्थाय देहशुद्धिं विधाय च। उत्थाप्य शयनादीनि कृत्वा वेश्मविशोधनम्॥ मार्जनैर्लेपनैः प्राप्य साग्निशालं स्वमङ्गलम्। शोधयेदग्निकार्याणि स्निग्धान्युष्णेन वारिणा। प्रोक्षणैरिति तान्येव यथा-स्थानं प्रकल्पयेत्। द्वन्द्वपात्राणि सर्वाणि न कदाचिद् वियोजयेत्॥

(क्रमशः)

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| June, 1938. | १८६०-शकीये ज्यैष्ठे<br>२१श-वर्षस्य २य-संख्या | Vol XXI, No. 2 |


## प्रशान्तरत्नाकरम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—श्रीकालीपदतर्काचार्यः ]

ब्राह्मणः—देव, कृतं तत् ।

राजा—अपि तेन दत्ता जीवनाशा ?

ब्राह्मणः—अथ किम् । उक्तं तेन 'अस्ति मणिसुवर्णादिघटितमहार्घभेषज-प्रयोगेण बलाधायकविविधखाद्यविनियोगेन च उभयोरेव जीवनाशा' इति ।

राजा—तत् कृतमाकुलतया, एवं क्रियताम् ।

ब्राह्मणः—देव, देव, यस्य मम दीनाधमस्य पत्नी पुत्रश्च भृशमनशनेन क्लिश्यमानौ राजयक्ष्मणा समाक्रान्तौ, यस्य मे नास्ति तयोरशननिष्पादन-सामर्थ्यमपि, सोऽहं कथमिव नानाविधमणिसुवर्णादिघटितमौषधं बलाधायकं प्रभूतक्षीरनवनीताद्याहारं वा निष्पादयेयम् । देव, अशरणोऽस्मि ! मम पत्न्याः पुत्रस्य च अचिरं सम्भाव्यमानया विपदा पर्याकुलोऽस्मि । उन्मत्त इव प्रतीकाराय भवन्तं प्राप्तोऽस्मि । तत् प्रसीद, परिपालय मम पत्नीसुतप्राणोपहारेण ममापि दरिद्रस्य ब्राह्मणस्य प्राणान् ।

राजा—आं ! श्रुतम् ! अप्यस्ति ते वाक्यशेषः ?

ब्राह्मणः—देव, अनशनेन तातः पञ्चत्वं गतः, माता मृता, पत्नी सुतश्च चरमं निश्वासं मुञ्चतः, इतोऽपि शेषापेक्षा ? अथवा

एतयोर्यदि न प्राणा रक्षिताः स्युस्त्वया नृप !
प्राणानेष विहास्यामि तच्छेषं वचनस्य मे ॥

राजा—ब्राह्मण, अपि नियमेन दत्तस्त्वया राजकरः ?

मन्त्री—( स्वगतम् ) अहो स्वामिनो नैष्ठुर्यम् ?

ब्राह्मणः—कुतः खलु मे दारिद्र्यपीडितस्य राजकरप्रदानसामर्थ्यम् ?

राजा—मूढ, ब्राह्मण, अनिष्पादितराजकरोऽपि राजानमलज्जः प्रार्थयसे ? अहो धिक् साहसम् !

ब्राह्मणः—देव, प्रसीद, विषमविपत्पातपर्याकुलाय मे न कोपं कर्तुमर्हसि। अनुकम्पस्व।

राजा—अहो, निर्लज्जता ! नह्यनुकम्पामात्रं जीवनं राज्ञाम्।

ब्राह्मणः—देव, दीनानुकम्पिनस्ते देवताः प्रसीदेयुः।

राजा—अलमनर्थेनाक्रोशनेन ! नियतकरनिष्पादनमन्तरेण नास्ति ते मोक्षः। अरे रक्षिणः पुरुषाः ! तावदेष कारागारे रक्ष्यतां यावदनेन राजकरो न प्रतिपाद्यते।

रक्षिणः—यथाज्ञापयति स्वामी।

ब्राह्मणः—अये भिक्षां भिक्षितेनानेन भिक्षामदत्त्वा कुक्कुरः प्रधावितः। राजन् ! अप्येष राजधर्मः ?

राजा—निर्मर्याद, अलमेवं वाक्प्रपञ्चेन दण्डमानं वर्द्धयित्वा, संयतो भव। अरे राजपुरुषाः ! किं कुरुथ ? शीघ्रमेनं—

कारागारे तमश्छन्ने शतकीटनिषेविते।
विना पानं विना भोज्यं स्थापयध्वं स्वभूतये ॥

तत् किं निमेषमपि यापयथ ?

रक्षिणः—यथाज्ञापयति देवः। ( ब्राह्मणं निगडेन बध्नन्ति )

ब्राह्मणः—महाराज, इतोऽपि तीक्ष्णतरं मे दण्डं धारय, नास्ति ततो मे भीतिः, किन्तु तथा कुरुष्व यथा मम दीनाधमस्य प्राणसंशये पतितौ पत्नीसुतौ नैव जीवनाद् विमुच्येते ! महाराज, एष ते पादयोः पतामि। पश्यतु देवः—

प्रजानां पालको राजा पितुरप्यधिको मतः।
तस्य प्रजासु नैष्ठुर्ये कस्तासां रक्षको भवेत् ?

राजा—धिक् चापलम् ! न हि राजधर्मोपदेशाय भवानाहूतः। तदलमनेन प्रपञ्चेन। सम्प्रति स्वकर्मार्जितं फलमनुवर्त्तस्व।

ब्राह्मणः—महाराज, अद्यापि विचारय राजधर्मम्। एवं नयातिक्रमं प्रत्यक्षमीक्षमाणा देवा न सहिष्यन्ते।

राजा—अहो, अविधेयता रक्षिणाम् !

रक्षिणः—अरे एहि ( आकर्षन्ति )

ब्राह्मणः—( साक्रोशम् ) भो राजन्,

यदि त्रिसन्ध्यं नियमेन तेजो
ध्यातं मया तत् सवितुर्वरेण्यम्।
तदा विधिस्तत्प्रभवात् प्रभावात्
कर्त्ता विचारं तव कृत्यराशेः।

अपि च—

विधानेन तवानेन पत्नी पुत्रश्च मे यदि।
जीवनेन विमुच्येते तत्त्वं सर्वैर्विनङ्क्ष्यसि।

सर्वे—शान्तं पापं प्रतिहतममङ्गलं महाराजस्य !

राजा—अहो, साहसम् ! अरे राजपुरुषाः ! शीघ्रमस्मात् प्रदेशादपसार्य ताडनेनास्य वाचं स्तम्भयत, यावदतः परमपि नायं मोहादपभाषेत।

रक्षिणः—एहि रे एहि। ( ताडयन्ति )

ब्राह्मणः—एष आगच्छामि। ( रक्षिभिः सह प्रस्थितः )

राजा—आर्य वाचस्पते, नूनमेष उन्मत्त एव।

मन्त्री—एवं स्यात् ।

वसन्तकः—वयस्य, एष उन्मत्तो वा रुद्राक्षो वा स्वयं रुद्रो वा भवतु। तथापि नाहमेतस्य तेजः सोढुमर्हामि। अहं पुनस्तदा अचिन्तयं यथा अनेन बहुलग्रन्थिककर्कशेन दण्डकाष्ठेन दुष्टवटुकस्य मस्तकं भङ्क्त्वा दुःशीलतामस्य प्रशमं नयामीति। ( नेपथ्याभिमुखे दण्डं दर्शयति )

राजा—भवतु वयस्य, अलमिदानीमतिक्रान्ते आक्रोशेन। आर्य वाचस्पते, विक्षिप्तोऽस्मि अनेन व्यापारेण, तदिहैव राजकार्यं समाप्य सर्वान् पारिषदान् विसर्जयतु, भवानपि यथाकामं श्रान्तिं विनोदयतु।

सर्वे—यथाज्ञापयति स्वामी। ( विभवतः परीवारान् राजवसन्तकौ च विना सर्वे निष्क्रान्ताः )

राजा—वयस्य, कथय केन साम्प्रतं चित्तनिर्वृतिमासादयामि, अचिन्तितोपनतेन दुष्टब्राह्मणवृत्तान्तेन सुतरां विक्षिप्तान्तःकरणोऽस्मि। तथाहि—

उन्मत्ततैव तस्याद्य जीवनं पर्यपालयत् ।
कामेश्वरविरोधेन कोऽन्यथा वक्ति तादृशम् ।

वसन्तकः—वयस्य, ननु सहिष्णुरेवासि।

राजा—भवतु, अलं पुनरनेन विक्षेपहेतुना स्मृतेन। साम्प्रतं चित्तनिर्वृतेरुपायमेव चिन्तय।

वसन्तकः—वयस्य, किमेवं चित्तनिर्वृतये चिन्तां वहसि, एहि साम्प्रतमेव विविधपानभोजनजुष्टं भोजनगृहं प्रविश्य चित्तं निर्वर्त्तयावः।

राजा—वयस्य, नेदमिदानीं रोचते।

वसन्तक—तर्हि चतुरङ्गक्रीडाकौतुकेनात्मानं विनोदय।

राजा—नेदमिदानीं रोचते।

वसन्तकः—जनकोलाहलशून्ये श्यामलारण्ये प्रविश्य मृगयाव्यापारेण चित्तं निर्वर्त्तय।

राजा—नेदमिदानीं रोचते।

वसन्तकः—तर्हि पुष्पवाटिकायाः प्रमोदोद्याने मौक्तिकसरःसोपानमधिष्ठाय मरालमिथुनक्रीडां पश्य।

राजा—नेदमपीदानीं रोचते, परं सन्निहितोऽसि।

वसन्तकः—( सप्रतिभम् ) आं! ज्ञातम्! एवन्तर्हि तत्रैव मौक्तिकसरसो नातिदूरवर्त्तिनि माधवीकुञ्जे ललितलावण्यायाः सुसखीजनाया लीलावत्या नित्यरमणीयाभ्यां नृत्यगीताभ्यामेव निर्वृतिं लभस्व।

राजा—आं! इदमिदानीं मे दृढं रोचते। तद्वयस्य, त्वरितं पुष्पवाटिकायामेव प्रविशावः।

वसन्तकः—भोः सुतरां विस्मितोऽस्मि तवानेन व्यवसायेन।

राजा—वयस्य, कथमिव?

वसन्तकः—यत् सर्वानेव विनोदनोपायानेकान्ततो दूरे वर्जयित्वा तस्यां लीलावत्यामेव स्थापितो महिमा। तत् किन्नु खलु इदम्?

राजा—वयस्य, न ममेव नेत्राभ्यां लीलावतीं दृष्टवानसि, येनैवं ब्रवीषि! तथाहि—

सा कल्पनाकलितकोमलसर्वदेहा
धात्रा कृता निखिलसुन्दरवस्तुसारैः।
शिल्पैरनल्पललितैरपि नृत्यगीतैः
स्वर्णाम्बुजे सुरभिता विहिता विविक्ता।

वसन्तकः—वयस्य, त्वमेवं वदसि, मम तु सा नैवंविधा प्रतिभाति, येन तामेव सर्वान्तःपुरवनिताभ्यः प्रशस्तां मत्वा तत्रैव सर्वं हृदयं समर्पयितु शक्यते! अथ वयस्य, कथं नु सा विप्रदुहितापि भवतो हस्तं गता इति विशेषतः श्रोतुमिच्छामि।

राजा—वयस्य, श्रूयताम्,—अस्ति तावदस्यैव नगरस्य पर्यन्ते वनोपकण्ठे ब्राह्मणपल्ली। तत्रैव केशवदासनाम्नः कस्यचिद् ब्राह्मणस्येयं मृतमातृका दुहिता लीलावती नाम। मया कदाचित् मृगयार्थं वनोपकण्ठमासाद्य एषा पुष्पचयनव्यापृता एकाकिनी गायन्ती विलोकिता। दृष्ट्वैव तदा

तामनिन्द्यसुन्दरीं श्रुत्वा चास्याः सुललितं सङ्गीतं सहसैव कन्दर्पेण वशीकृतोऽभूवम्, सापि मदीयतुरङ्गमपदशब्देन परावृत्तवदना मामालोकयन्ती तथैवात्मानं भावपर्याकुलं प्रत्याय्य प्रथममनोविकारप्रच्छादनकामनयेव सन्निहितं स्वमावासं प्रति प्रातिष्ठत।

वसन्तकः—ततस्ततः ?

राजा—ततश्चाहं—तया सह गतं चित्तं तत्रैव प्रतिपालयन्।
सुदीर्घं समयं मोहाद् व्यतीतं नावबुद्धवान्॥

वसन्तकः—ततस्ततः ?

राजा—ततश्च मृगयासन्निवृत्तेन परिजनवर्गेण प्रबोधितः कस्माच्चन प्रतिवेशिपुरुषात्तत्परिचयं संगृह्य भग्नहृदयः पुरे प्रत्यावृत्तोऽभूवम्।

वसन्तकः—कीदृशोऽस्याः परिचयः, येन परिचयलाभानन्तरं हृदयभङ्गः ?

राजा—एषा सा केशवदासस्य मृतमातृका दुहिता बालविधवा चेति।

वसन्तकः—धिक् कष्टम्! ततस्ततः ?

राजा—वयस्य, किं कथयामि, सर्वं प्रतिषेधमतिक्रम्य तथा प्रज्वलितस्तामधिकृत्य मे कामहुताशनो येन प्रत्यहमेव तादृशे काले तस्या दर्शनार्थं गमनव्यापृतोऽभूवम्। अथ तृतीय एव दिवसे तामपि सुतरां कामगृहीतामालोक्य तया सह प्रीत्या रहः सङ्गतोऽभवम्।

वसन्तकः—ततस्ततः ?

राजा—ततः कथमपि गृहीतवृत्तः केशवदासो यावदेव दुहितरं दृष्टिपथाद् बहिर्गच्छन्तीं नानुमेने, तावदेवाहमेकदा गुप्तघातकेन तं घातयित्वा जनानामजानतामेव लीलावतीं गृहीत्वा नवीनपुष्पवाटिकायां रहस्यं स्थापयित्वा समुचितवयोरूपरमणीयाभिः सखीभिः परिवार्य नृत्यगीतकलाशिक्षणाय कस्यचिन्निपुणस्य कलाविदः करे तां न्यस्तवानस्मि। अथ तेन शिल्पिना विहितोपदेशया तया स्वल्पेनैव कालेन स्वां निपुणतां प्रकटय्य विस्मयं नीता वयमिति साम्प्रतमुपदेशको विसृष्टः।

वसन्तकः—अथ वयस्य, एवं किल कन्यापहारिणं त्वां कथं जानपदा नोत्प्रेक्षितवन्तः ? अथवा उत्प्रेक्षमाणा अपि कथमुपेक्षितवन्तः ?

राजा—वयस्य, अनुपेक्षमाणाः किं वा कुर्वन्तु, राजशक्तिरनभिभाव्या भवति। तथापि मया शान्तिसंरक्षणाय तेभ्यः सुमहानर्थराशिर्विसृष्टः। तत एव शान्तिः !

वसन्तकः—अहो, सर्वमेव साध्यमर्थस्य !

राजा—वयस्य, लीलावतीवृत्तान्तेनानेन सुतरामुत्कण्ठितो नालमस्मि क्षणमपीदानीं तददर्शनदुःखमनुभवितुम्। तदेहि, यावत्तत्रैव पुष्पवाटिकायां गत्वा प्राणाधिकां प्रियां पश्यन्नात्मनो निर्वृतिं निर्वर्त्तयामि।

वसन्तकः—भो वयस्य, दूरमधिरूढः सविता, तदद्यापि पानभोजन-विरहेण खिन्नोऽस्मि, तदस्य कष्टस्य प्रतीकारं कृत्वा अनन्तरमेव गमन-मुचितं पश्यामि।

राजा—अलं चिन्तया, तत्र गत्वैव प्रबन्धं करिष्यामि।

वसन्तकः—का वा दीनस्य मे गतिः ? ( निष्क्रान्तौ )

( ततः प्रविशति पुष्पवाटिकायां ससखीजना लीलावती )

लीला—हञ्जे, यूथिके, अपनय प्रसाधनोपकरणानि, अद्य नात्मानं प्रसाधयिष्यामि।

यूथिका—सखि, कथमिव ?

लीला—हञ्जे, किंवा मया प्रसाधितया, यस्या एतावतापि समयेन प्रियो नायाति ?

यूथिका—सखि, लीलावति, किमेवमभिमानं वहसि, भर्त्ता खलु राजा, तस्य कार्यान्तरमपि नातिक्रमणीयम् !

लीला—यूथिके, कीदृशं तत् कार्यान्तरं, येन प्रियजनो न दृश्यते।

यूथिका—सखि, राजकार्यं किल तत् ! सखि, राजैव शुभाशुभयोः प्रतिभूः प्रकृतीनाम्, यद्यसौ राजकार्यमनपेक्ष्य माध्यस्थ्यमवलम्बते, महानेव विपत्पातः प्रजानाम् !

लीला—मूढे न जानासि। आदौ कामपरिभाविना रूपेण मामेवमवशीकृत्य साम्प्रतमन्तःपुरिकागृहीतचेताः शठोऽसौ माध्यस्थ्यमवलम्बते। न राजकार्यपारतन्त्र्येण।

यूथिका—सखि, मा मैवम्, भर्त्तारमधिकृत्य नैवं सम्भावयितुमर्हसि।

लीला—कथमिव ?

यूथिका—तदिदं स्वयमपि जानास्येव, तथापि किमिति प्रबोधेऽपि सुप्तिमभिनयसि।

लीला—न जानामि, तत् कथय।

यूथिका—सखि, अपि नाम दृष्टं त्वया तस्य राजकार्यान्तरालेऽपि लब्धावसरस्य त्वामदृष्ट्वा माध्यस्थ्येन समवस्थानम् ? त्वदर्थमेव परिकल्पितायामस्यामेव पुष्पवाटिकायामवसरे विश्राम्यति, निशां यापयति, जलक्रीडामारचयति, त्वयैव साकं प्रमोदनिर्भरेण मनसा माधवीकुञ्जे परिभ्रमति, सङ्गीतकलामासेवते, तव वदने स्मितलेशमपि वीक्षमाणः स्वर्गसुधामहाह्रदमवगाहते, तव मुखे कारणान्तरेण समुपजातं मालिन्यं दृष्ट्वा च सर्वमेवेदं चराचरमन्धकारमयं दुःखमयं पापमयं वह्निज्वालाजटिलञ्च पर्यालोकते। त्वामेव शुभाशुभे प्रमाणं गणयति। प्राणैः पणैरपि तवैव प्रीतिमुत्पादयितुं प्रयतते। सखि, एवंविधेऽपि राजनि मा अविश्वासिनी भूः।

लीला—आम् एवम् ! तथापि प्रतिक्षणं तत्प्रेमविपर्ययशङ्कया व्याकुलीभवामि। हञ्जे, यूथिके, कथय कदा स समागमिष्यति ?

यूथिका—सखि, अलं वैक्लव्येन, नूनमिदानीमेव भर्त्तारं द्रक्ष्यसि !

लीला—तद् यावदसौ नागच्छति तावदेकां प्रेमगीतिकां चिन्तयामि ( गीतिकां चिन्तयति )।

यूथिका—अहमपि लब्धावकाशा तव केशप्रसाधनं करोमि ( केशप्रसाधनं करोति )।

( क्रमशः )

# छात्रशिक्षा

[ निबन्धकः—श्रीबदरीनाथ-साहित्यशास्त्रिधर्मशास्त्राचार्यः ]

भावुकेऽस्मिन भारते वर्षे विजयते विश्वनाथाश्रिता वाराणसी, यस्याः प्राकृतिकीमपि स्थितिं वर्णयितुं प्रवृत्ताः साहसिकाः कवयो मध्ये प्रारम्भ एव वा परिश्राम्यन्तो मूकीभवन्ति। विशेषतो वर्णयितुं पुनः सहस्रवदनः शेष एव कथञ्चित् पारयेत्। तत्रैव बोधविभवो नामैको विद्वद्वरोऽध्यापयति स्म नैकानन्तेवासिनः। एकदा प्रातः सन्ध्यां समुपास्य विद्यालयं समुपगतेषु छात्रेषु सञ्जाते च सप्तवादनसमये स्वीयं प्रातःकृत्यं समाप्य समागतवति शिक्षकवरे समदृश्यत पुरातनी प्रणाली यत्सहसैव समुत्थिताश्छात्रा गुरुपादोपसंग्रहणमकुर्वन, अददाच्च सोऽपि महात्मा तेभ्यः शुभाशीर्वादान। ततः शुभासनं भूषयति गुरौ स्वीयं स्वीयं पुस्तकं पुरतः संस्थाप्य समुपविष्टेषु विद्यार्थिषु देवगणपरिवृतवाचस्पत्यधिष्ठिताऽऽङ्गिरसी निवासशालेवाऽशोभत पाठशाला। तदा पण्डितपरिवृढः समभाषत चेत्थम्, अयि संस्कृतसमुज्ज्वलितस्वान्ताः, धन्या यूयम्, यदीदृशे कराले कलिकाले व्यवहारदशायां प्रशस्तायाः सद्य एवोन्नतिसाधिकाया युवत्या आंग्लभाषायाः प्राचुर्येऽपि आधुनिकव्यवहृत्यनुपयोगिनीं परिणाम एवावनतिविनाशिनीं जरठां संस्कृतां भाषां सेवध्वे। वस्तुतो महतः पुण्यस्यैव परिपाक एषः, यत्काश्यामुषित्वा संस्नाय भागीरथ्यामुपास्य विश्वेशं सुरभारती समाश्रीयते। परमद्य चतुर्दशी तिथिः, अस्यां न नूतनः पाठ्यभागोऽध्येयः, अतो युष्माकं मनसि या विचिकित्सा वर्तते तामेव निराकरोमि विशदीकरोमि च सन्देहनिराकरणेन वः स्वान्तम्, अतः पृच्छयतां प्रष्टव्यमित्याज्ञाप्य तूष्णीं भूते बुधवरे परेषु च स्वीय-स्वीयग्रन्थार्थगतसंशयपरिशोधनोद्युक्तेषु, सुशीलसुमति-सुमनः-सामभट्टाभिधानाश्चत्वारो विद्यार्थिनः पर्यायेणैव स्वमनोगतमर्थं विज्ञापयितुं किञ्चिदुपसृताः। तेषु सुशीलः प्रथमं निवेदयति स्म

अज्ञानतिमिरपटलमार्तण्ड, अहो महद् भागधेयमस्माकं यद् विदितवेद्या भवादृशाः करुणया शिक्षयन्त्यस्मान्, अतोऽस्मिन्नेवावसरे शिक्षितैर्भाव्यमस्माभिः, निरर्थकमेवापयातोऽवसरः खलु कोटिरूप्यकव्ययेनापि पश्चान्न लभ्यते, अतः सांप्रतमेव मानसिकं संशयं निराचिकीर्षामि, यदाधुनिक्याः कलिनिगृहीतायाः प्रजायाः कथमुद्धारो भविष्यति ? सा हि श्रुतिमुन्मत्तजनोक्तिमिवावधीरयति, धूमवर्त्तिकापानमेवाग्निकार्यं बोधति, देहसंरक्षणोपायचिन्तनमेवात्मविवेकं मनुते, न विश्वसिति देवान्, न करोति पितृषु श्रद्धां, हन्त क्व सा पुरातनी वर्णाश्रमधर्मपरता, क्व स साधुसत्कारः, क्व सा विषयेष्वनासक्तिः, क्व तद् दीक्षितत्वं, क्व सा छात्रप्रकृतिः, क्व स प्रभावः, क्व सा योगक्रियादिपटुता। निश्चप्रचं शशशृङ्गसादृश्यमेव प्राप्ता निखिला प्राचीना रीतिः। अहो साम्प्रतमीदृक् समयः समुपस्थितो यदधर्मं धर्मं इति धर्मं चाधर्मं इति जानन्तो जना दुष्टे वर्त्मनि गच्छन्ति, मुखेन तु धर्मो धर्म इत्युच्चैः शब्दायन्ते। तेषु केचन प्रथयन्ति, इन्द्रियजयपूर्वकं नानाविधपशुमारणकुटिलरीतिदूषितयागादिपरित्यागद्वारा प्राणिनामहिंसनमेव सुकृतमिति। परे च सर्वव्यापक ईश्वरो महत्याऽऽध्यात्मिक्या भक्त्यैव ज्ञायते, अखण्डरूपः स सखण्ड इव न मन्दिरमात्रे तिष्ठति, अतो मूर्तिपूजा निष्प्रयोजनैव इत्यादिकं साटोपं प्रतिपादयन्तो जनान् मोहयन्ति। अन्ये पुनः मोक्ष एव पुरुषार्थस्तत्र ब्राह्मणत्वादिजातिर्न साधनम्, अतोऽन्त्यवर्णोऽपि उपदेष्टुं शक्यते, तदलं जातिभेदविचारेण। त्यक्तव्याऽस्पृश्यता, देयो ह्यन्त्यजानामपि देवमन्दिरादिषु प्रवेशः। सर्वात्मा प्रभुः किं तैर्द्रष्टुं स्प्रष्टुं समर्चितुं च न पार्यते, कैषा कुनीतिरिति समुच्चैरुच्चारयन्तः प्रशस्यन्ते। अपरे च हन्त हास्माकं बालवृद्धविवाहादितो विनाशः, अतो निखिला तादृशी दुष्टा प्रथा मोचनीया, धर्मो जनसंहतिसंमतो देशकालाविरोधी च सेव्य इति व्याहरन्ति। तदेतेषु कस्य सिद्धान्तोऽव्याहतः किं वा धर्मस्वरूपं कथं च तत् समाचरणीयमिति कृपया प्रतिपाद्य संशयं नः समूलमुच्छेत्तुमर्हति महाभागः।

ततः सुमत्यभिधानः शिष्यः किमपि पुरःसृत्य साञ्जलिबन्धं निवेदयामास। करतलाऽऽमलकीकृतनिखिलपुरातनेतिवृत्त, गुरो, इदं भारतवर्षं कियत्परिमाणम्? अत्र के पर्वताः? का नद्यः? कानि रुचिराणि नगराणि? के चात्र संरक्षका उद्धारकाः शासका उपदेशका अलङ्काररूपाः कण्टकमयाश्चाभवन्? तैश्च कीदृशि चरितानि व्यधीयन्त? तेषां प्रादुर्भावकालश्च कः? के चास्माभिरनुसरणीयाः? किञ्च, वैयासिकेषु पुराणेषु दृश्यन्ते नानाविधानीतिवृत्तानि, साम्प्रतिकानि चोपलभ्यन्ते बहूनि, तेषु पुराणलिखितानि सांप्रतिकानि वा विशेषेण वेदितव्यानीति।

ततः सुमना नाम शिष्यः साञ्जलिबन्धं समवेदयत्;—समयोचितशासनकोविद, अहं खलु ह्यः पुस्तकक्रयार्थमापणं प्रति समयाम्। तत्र च बहूनां कथममरवाण्या उद्धारः स्यादिति चर्चावतां समुन्नतौ बद्धपरिकराणां बुधानां वचनान्यश्रृणवम्, तेषु केचन कथयन्ति स्म। विचार्यतां तावत् जनन्यै इव संस्कृतभाषायै स्पृहयतां तयैव श्लाघमानानां च वनीयकानां विद्यार्थिवराकाणां दशा। सुदृढमवमन्यन्ते ते सर्वैर्यत्र कुत्रापि। देशकालौचित्येनांग्लभाषानभिज्ञतया च प्राज्ञैरपि नाधिगम्यतेऽध्यापकपदवी। न तेषां संमानः, न च शिक्षकेषु तेषां परिगणनम्, परमीदृशं निकारं सहमानैरपि न क्रियते तैः स्वीयसमुन्नतये समुद्योगः। प्रथमतो ब्रह्मचर्यमाचार्यशुश्रूषा सत्यनिष्ठा ईश्वरे सती भक्तिः सदुत्साहो भाषणनैपुण्यं विवेकिता विनयश्चेत्यादयो विषया विधेया एव तैः। पाश्चात्त्यशिक्षणशैल्यामपि यदुत्तमं तदादाय परिहर्त्तव्यं तद् यदपकृष्टं नाम। विद्यार्थिजनस्मरणभूतया परीक्षापिशाचिन्याप्यनया हन्त निर्मूलितो धर्मः। निरीक्ष्यताम्, परीक्षणकाले सन्निहिते सावित्रमपि मन्त्रं न सम्यग्जपन्ति परीक्षार्थिनः, कथं च बुद्धिर्विशदा जायताम्। पुराऽत्र महामहिमशालिनो निखिला एव विद्वद्वराः कामपि देवतामतिप्रगाढया भक्त्या सादरं समुपासते स्म जायन्ते स्म, जिह्वाग्रनृत्यत्प्रायभारतीवैभवेन भ्राजमानाः, अद्यावधि ते विजयन्ते च यशःकलेवरधारिणः। अतः स्वेष्टदेवतां हृदि निधाय कर्तव्यः समुचितः समुत्साह इति।

अन्ये पुनरुदीरयामासुः,—अहो कीदृक् करालः कलिकालः समुपस्थितः, यत् सुबहुदिनसाध्येन महता श्रमेणाऽऽरूढायां परीक्षाश्रेण्यामत्युत्तमां कोटिमासाद्य समुत्तीर्णोऽप्याचार्यपदव्या मासिकं पञ्चदशरूप्यकरूपमायं कर्तुमपि न पारयति संस्कृतज्ञः, अहो! जठरानलदाहेन दन्दह्यमाने देहे परितो वेष्टिते च निर्धनताप्रतानिन्या भस्मीभवत्युन्नतिविषयिणी वार्तापि। एतन्निदानं तु संस्कृतपठनप्रणाल्याः समयाननुरूपतैव, अतोऽत्र परिवर्त्तनं विधेयं पाठ्यग्रन्थेषु, निष्काश्या अनुपयुक्ताः, संस्थाप्याः सारगर्भिताः, निर्मातव्याश्च नूत्ना उपयोगिनः, ज्ञातव्या इतिहासादयः, सर्वैः प्रेक्षितव्यानि समाचारपत्राणि भूगोलवर्णनानि च। ये पुनरन्यभाषाऽनुगता विषयास्तेऽपि प्रयोजनानुपातिनः शिक्षणीया एवेति।

अपरे तु स्वीयं मतमेवं प्रथयामासुः,—अयि सहृदयाः! अवधीयतां तावत्, अत्रैवाऽस्मत्पूर्वजा कीदृशाः प्रादुर्भूताः, यै रहस्यमय्यः स्मृतयो नैकविधतत्त्वविचाररूपाणि पुराणानि च निरमीयन्त, येषु एकमपि श्रीमद्भागवतमधीयते चेत् तत्र समस्तस्य भूगोलस्य पुण्यमयानामितिहासानां विशदीकृतस्य वेदान्ततत्त्वस्य च विहितायां विचारणायां कस्य साह्लादं मनो न द्रवीभवति। अतस्तान्येव पुराणानि शुद्ध्या प्रचारणीयानि। किन्तु एकस्यैव प्रयत्नेन न तत् सिध्येत् अतो महान्तमेकं सङ्घमापाद्य सप्रमाणं सयुक्तिकं च निवेदनीया अधिकारिणः, तथा सति तेऽपि सकरुणया दृष्ट्या द्रक्ष्यन्ति, भविष्यति च गीर्वाणवाण्याः पुनर्विलसनमिति।

इतरे समुद्घोषयन्ति स्म, संस्कृतस्यावनतौ हेतवोऽध्यापका एव, यतस्ते नाऽध्यापयन्ति समीचीनया रीत्या। यत् पाठयन्ति, तदपि पुनर्भृत्यादानमुद्दिश्यैव, अहो अनारतं वेतनायैव रोचन्ते। पुनरस्य पत्रस्य कुसुमस्य फलस्य पक्षिणः पशोश्च संस्कृते किं नाम? तथा कालशाकस्य प्रियकस्य कैटर्यस्य कारण्डवस्य रुरोश्च किमभिधानम्, पुनः शादशब्दाद् वलच्प्रत्यये कृते शाद्वल इति सिध्यति, तथा सति शाद्वल इत्यस्य कोऽर्थः इत्यादि

सादरं साञ्जलिबन्धं पृष्टा अपि जोषमाश्रिताः सन्तः प्रतिवाचं न ददते, अश्रुतिमभिनीय सिषाधयिषन्ति स्वार्थम्। यदि जिज्ञासुनाऽसकृदुक्तं तदा तमेवोपक्रोशन्ति, वृथैव वितण्डां विधत्से त्वमिति। अहो जल्पाकता संकसुकानामेतेषाम्, किमेतच्छोभनम्? स्वयमेव नानाविधान् कोशानन्यान् ग्रन्थांश्च समालोच्य विज्ञाप्य च पण्डितप्रकाण्डान् शिक्षणं तु दूरापास्तम्? हन्त एतैः केवलं वावदूकतया याप्यन्ते दिवसाः। यद्येते समुचिततया शासनं विदध्युः प्रचलेयुश्च शास्त्रोक्तां सरणिं समालम्बमानास्तदा निश्चप्रचमेव भविष्यत्युद्धार इति।

परे प्रोचुः, नहि ते दोषभाजः, यतः सप्रश्रयं पृष्टस्य संशयस्योत्तरं विद्वद्भिर्दीयत एव, नूनं शतशः प्रयत्नेषु विहितेष्वपि अधिकृतजनविहितोहापोहनिराकरणाय न निरोद्धुं पार्यते वाणी, तदा संलापाय रज्जुरिव समाकर्षत्येव वक्तृता। साऽहङ्कारमनुयोगे योजिते तु को ददात्युत्तरम्। पुनः केचित् सहृदयैर्व्याहृतेऽपि समीहिते प्रतिवचसि अन्यत्र गत्वा समुद्घोषयन्ति ते विद्वम्मन्याश्छात्राः यदस्मिन् विषये अमुको विद्वान् आवेदितः न चापारयत्स प्रत्युत्तरं दातुम् इति च पुनरेतेऽभिभवन्ति विशेषज्ञान् उपहसन्ति शिक्षकान् विरुन्धन्ति, मिथः समुद्घोषयन्ति च वर्तमानप्राचीनरीत्यनुपातिन्याः संस्कृतशिक्षापद्धतेरित्थमपकर्षम्—यत् त्रयोदशवर्षपर्यन्तं व्याकृतैरटनेन स्वायत्तीकुर्वन्ति व्याकरणाऽऽचार्यपदम्। अस्मिंश्चरमयुगे तु एतावता कालेन जीवनार्धं व्यत्येति, न चाऽधिगम्यन्तेऽन्यानि कान्यपि शास्त्राणि। अत्र समुदाहरन्ति च यन्निम्बूकानि नैरुज्यावसरे रुधिरादिवृद्धिनिदानानि लाभकारीणि रोचकानि च भवन्ति, पुनर्ज्वरेण संतप्ते कलेवरे स्वस्वव्यापारासमर्थेषु समस्तेषु हृषीकेषु तान्येव फलानि गरलाकारेण परिणमन्ति, यतो विकारयन्ति सहजां प्रकृतिम्, दूषयन्ति धातून् दाहयन्ति देहं तुदन्ति यकृतम्। तथैव सर्वतः समुल्लसितां विबुधभारतीमलङ्कारा इव तेजयामासुः शेखर-मनोरमादयः सांप्रतं तु विकलेषु शिक्षाद्यङ्गेषु प्रस्फुटिते आंग्लशिक्षणसंतापे मृतप्रायायां च तस्यां

सैव निरवच्छिन्नं यावज्जीवमभ्यस्ता हलन्तादिसूत्राध्याहारशैली विपायत एवेति आन्तरान्धतमससहस्रकिरण, एतेषु कतमं मतमुपयोगि ग्राह्यं चेति ।

अनया प्रणाल्या निवेदयत्येव सुमनसि नियतकालापक्रमणतः स्वाशयावेदनावसराऽभावशङ्कया संभ्रान्तचित्तः सामभट्टः साञ्जलिबन्धं व्यजिज्ञपत् —भो प्राज्ञमणे, उन्नतौ निदानं तु पाक्षिकस्य मासिकस्य वा त्रिविधस्य संस्कृत-पत्रस्य प्रकाशनमिति केचित् सुप्रलपन्ति । तत् कया रीत्या ईप्सितो लाभः प्राप्यते । अद्य यावद् बहूनि पत्राणि नामावशेषीभूतानि । अत्र को हेतुः ? कानि तानि ? तथा सांप्रतमपि कानि प्रचलन्ति एतेषां सर्वतोऽप्रसारे ग्राहकाभावो वा, प्रशस्तप्रबन्धराहित्यं वा एतद्भारधुरीणसंपादकासद्भावो वा बीजम् ? कथं वोद्धारो भविष्यति, संस्कृतज्ञानां किं कर्तव्यं केन च वयं श्लाघनीया भवेम इति सविस्तरं प्रतिपाद्य संशयमस्माकमपाकुर्वन्तु भवन्त इति । ततस्तु गुरुरपि तेषां मानसवैमल्यार्थं शनैर्वक्तुं प्रारभत ।

( क्रमशः )

---

## कविप्रशस्तिः

[ निबन्धकः—श्रीदुर्गादास-गोस्वामी ]

प्रश्च्योतन्मकरन्दविन्दुकरुणोद्गीतालिभिः सन्ततं
सम्मुग्धं रमयत्यहो कविकुलं रामायणी सत्कथा ।
यस्योत्फुल्लविचित्रमञ्जुकविताकुञ्जेषु पुञ्जीभवत्
सोऽव्याद्वः कलकण्ठकोकिलवरो वाल्मीकिराद्यः कविः ॥१

छायां यस्य समेत्य हृष्टमनसः साहित्यमार्गे मुदा
स्वच्छन्दं विहरन्ति पान्थकवयः शाखानिलैस्तर्पिताः ।
भुञ्जाना इव भोः सुधामयफलान्यद्यापि सञ्जीविताः
सान्द्रस्निग्धपुराणभारततरुं व्यासं तमीशं भजे ॥२

चिरादिन्दोर्बिम्बं सकलमिव मुक्तं प्रतिनवं
तमोग्रस्तं नाट्यं विमलवसु यस्य प्रभवति ।
सदा विश्वोद्गीतेष्वपि तु रघुकारादिषु भृशं
तदीडे भासस्य प्रणतशिरसाहं कविमुनेः ॥३

अलङ्कृतार्था नियतं रसेन यं प्रसादयन्तीव वरं महाकविम् ।
स्वच्छन्दवृत्तप्रकृतिः सरस्वती तं कालिदासं शिरसा नमाम्यहम् ॥४

सरसध्वनिवागलङ्कृतिं विपुलार्थां रुचिरां सदन्वयाम् ।
सुनयां भजते गिरं कविः स चिरं यो जयतीह भारविः ॥५

साकेतभूतेः प्रथने शरच्छ्रियो यः शब्दशास्त्रे यमके नये तथा ।
दधार कामं खलु नैपुणं कविर्भाषाविदं भट्टिमहं नमामि तम् ॥६

स्फुटाक्षरा यस्य चिराय कल्पना विहङ्गमोवोर्ध्वमबाधितक्रमा ।
चित्रीकृताख्यानमुपैति लीलया चिन्तागुरुं बाणमहं तमर्चये ॥७

छायेव यं प्राज्ञकवीशमादरादन्वेति वाणी करुणस्य जृम्भणे ।
तं नाट्यनिर्धूतपराभिमानकं भक्त्या नतोऽहं भवभूतिमर्चये ॥८

प्रभूतजाड्याहतिदुष्टभारती-श्रीपादपद्मं सहसा य आदरात् ।
ब्रुवन्ति नो ते कपटानि भारवेश्छायेति माघं मलिनायते भृशम् ॥९

वयःप्रवृद्धोज्ज्वलमेत्य निर्दयं स्निग्धानलं सा दमयन्तिका रतिम् ।
यच्चारुकाव्ये भजते नरेन्द्रजा श्रीहर्षनामा जयतात् स सत्कविः ॥१०

माधुर्यादधरीकृता ननु सुधा रूक्षाः पिकानां गिरो
लालित्येन विधुच्छविः सुषमया हीणात्मनो लक्ष्मया ।
राधेशः प्रणयी स्वयं मुररिपुर्भक्त्या च गीतावले-
र्यस्य श्रीजयदेवगौडजकवेः प्रह्वोऽस्मि तस्मिन्नहम् ॥११

सद्वाचः सनया रसध्वनिगुणालङ्कारशोभोज्ज्वलाः
कान्ताः सप्त तिलोत्तमा इव नवाः काव्याङ्गनाः सृष्टवान् ।
संगृह्णन् कणशः श्रियं निरुपमां यः कालिदासादितो
वङ्गीयः सुकविश्चिरं विजयतां श्रीहेमचन्द्रः स नः ॥१२

# शब्दार्थवैचित्र्यम्

[ निबन्धकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः, एम्. ए. ]

( २ )

प्रियपाठकमहाभागाः, कस्य वा न प्रनृत्यति हृदयं हर्षेण स्वर्णादिसंयोगेन। न केवलमधिगम एव सुवर्णस्य प्रमदभरेण प्लावयत्यन्तरात्मानम्, नाम्नोऽप्यस्य संश्रवणमात्रेण समुपजायते परमा प्रीतिर्मनुजजनहृदि। अत एवाङ्ग्लैर्बहुत्र प्राशस्त्यप्रकर्षादिबोधनाय *golden* ( सौवर्णम् ) इति विशेषणं प्रयुज्यते। यथा, *golden age* ( कृतयुगम् ), *golden hours* (सुखमयः समयः ), *golden opportunity* ( श्रेष्ठोऽवसरः ) इत्यादि। अस्माभिः पुनः कामिनीकाञ्चनयोर्निःसारत्वमेव समाकलय्य नेदृशेषु स्थलेषु सौवर्णशब्दः प्रयुज्यत इति केषाञ्चन पण्डितप्रकाण्डानाम् अभिमानः। सर्वथा मोहजालसमावृताः प्रतीच्या निखिलं जगत् सुवर्णमानेन सम्मिमते, प्राच्याः पुनः सर्वत्र शास्त्रमेव प्रमाणीकुर्वन्तो नैव बध्नन्त्यास्थाम् आगमापायिषु धनरत्नादिषु इति सावधारणमुद्घोषयन्त्येते। अत एव श्रेष्ठत्वावबोधनाय धन्यशब्दः प्रयुज्यतेऽस्माभिरिति दृष्टान्तोऽप्युपन्यस्यते एतैः। परं सर्वमेतत् पाणिनीयतन्त्रानवलोकविजृम्भितमिति प्रतिभाति। तथाच भगवतः पाणिनेः सूत्रम्—धनगणाल्लब्धा (४।४।८४) धनगणशब्दाभ्यां द्वितीयासमर्थाभ्यां लब्धेत्यस्मिन्नर्थे यथासंख्यं यत्प्रत्ययो भवति इति काशिकायां व्याख्यातम् अतश्च स्फुटं प्रतीयते यद् धन्यशब्दोऽपि मूलतो धनलाभमेवाभिदधाति, एवञ्च मानवप्रकृतिः प्रायेण तुल्यरूपैव, नात्र प्राच्यप्रतीच्यकृतो विभेदो विशेषतो वर्तत इति सिद्धम्।

---

# अवतारप्रयोजनम्

[ निबन्धकः—श्रीविधुभूषणन्यायव्याकरणतीर्थः ]

नमो ब्रह्माण्डकल्याणसाधनाय पुनः पुनः ।
धरायामवतीर्णाय शाश्वताय परात्मने ।।

अयि निखिलपुराणप्रबन्धनिष्णाता महाभागाः कोविदाः ?

ज्ञातमस्ति तत्रभवतामखिलनिगमागमविषयविशेषाभिज्ञानां मनीषिणां विदुषां यद् दुर्मददुष्टप्रबलनिपीडनक्लिष्टस्य जगतोऽनर्थकारिनिकरविध्वंसनेन रमणीयां शान्तिं, तथा विषमविषयविषविषमीकृतचेतसां संसारिणाममृतस्राविणोपदेशवचसा मुक्तिञ्च परमां साधयितुकामेन परमकारुणिकेन भगवता प्रतियुगमेव परिगृहीतविग्रहविशेषेणावताररूपेणालङ्कृतो मर्त्यलोक इति। तत्र सत्यपि बहुलप्रचारे विविधसारगर्भतया मनीषिवृन्दमनोहराणां तद्विषयकप्रबन्धानां, मदीयमनोगतभावसमीचीनताप्रतिपत्तये तस्मिन् भवतां सुधानिःस्यन्दिवचनावलिं श्रोतुमिच्छया मुखरीकृतेन मया विपश्चितां पुरतः समुपस्थाप्यते किञ्चित् प्रास्ताविकं नाम ।

अयि विज्ञाः !

परिदृश्यमानस्यास्य जगतो विषमसङ्कटसमये तत्तद्भावपद्धतेः परिवर्त्तनेन धर्मप्रचारादिफलकत्वमेव भगवदवतारस्य प्रसिद्धं लोकसमाजे, तथाच आसन्नावसानसमये द्वापरयुगे शिशुपालकंसप्रभृतिभिर्धर्मद्रोहिभिर्निष्पादितमर्मग्लानिकस्य जगतो दुर्वहं भारं लघयितुं विधृतश्रीकृष्णविग्रहो भगवानाविर्भूतः। किञ्च आ-सत्यकालं परशुपराघातपतनोन्मुखमहापादपस्येव दुर्वृत्ताचरणविध्वंसोन्मुखधर्मस्य परिरक्षणाय मत्स्य-कूर्म-वराहप्रभृतिविविधकलेवरमासाद्य प्रतियुगमेवावतीर्णो भगवान् मर्त्यभूमौ । एतच्च भगवद्वचनादपि प्रतिपाद्यते, तथाचोक्तं गीतायां चतुर्थाध्याये—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ इति ।

परञ्च परमेश्वरनारायण इव समस्तसुरासुरादिशिरोरत्नचर्चितचरणारविन्दा निखिलशक्तिमूलाधारभूता विश्वहितसदयमानसा त्रिभुवनप्रसूतिः परमेश्वरी ईशान्यपि प्रबलवीर्य-पराभूतसकलशक्तिकैः प्रभञ्जननिकरैर्विदलिततरुभिरिव अमितपराक्रमनिर्जितत्रिभुवनैर्दानवैर्दलितदेवगणैर्दुःखविध्वंसनकामनया कृताञ्जलिभिः स्तूयमाना भूयो भूयः परिगृहीतदुष्टनिग्रहक्षमविग्रहा अवततारेति विदितमेव पौराणिकवृत्तान्तरसरसिकानां भवताम् । तत्रापि दानवनिकर-परिहननार्थं भूयः सम्भाव्यमानावतरत्वमनया प्रतिपादितं स्वयमेव देवानाम्—

"इत्थं यदा यदा बाधा दानवोत्था भविष्यति ।
तदा तदाऽवतीर्याहं करिष्याम्यरिसंक्षयम् ॥ इति ॥

इत्थञ्च अवतारस्य बाह्यजगतां समुपकारिकर्मनिवहनिर्वाहप्रयोजनकत्वेऽपि न मुख्यतस्तदर्थमेव केवलं भगवदवतारावश्यकत्वम् । भगवदिच्छया साधनातिशयलब्धालौकिकसामर्थ्यैः साधारणमानवैरपि तादृशकर्मसम्पादन-सम्भवात् । किञ्च—इच्छामात्रसम्पादितत्रिभुवन-सर्ग-स्थितिविनाशस्य नियन्त्रितचन्द्रसूर्यादिज्योतिष्कमण्डलपरिस्थितिकस्य विश्वशक्तिसम्भवस्य वीतरागद्वेषादिमनोमलस्य भगवतो नारायणस्य रावणकंसानिदिधनाय प्रहरणग्रहणस्यावश्यकत्वं केवलसामाजिकमङ्गलसाधनाभिलाषेण धर्मप्रचारादि-कर्तृत्वरूपप्रयोजनवत्त्वे वा अतुलनवीरत्वप्रभावचमत्कृतत्रिभुवननिवासिनां तपस्यातिशय्यपरिप्राप्ततपःप्रभासमुद्भासितदिङ्मण्डलानां वा पुरुषप्रवराणां शक्त्यपेक्षया समधिकशक्तिकत्वं तस्य प्रतीयमानं न स्यादिति परमेश्वरस्यापि सर्वशक्तिमतः साधारणापेक्षया प्रकृष्टत्वानुपपत्तिश्च । अतो दुर्वृत्तनिधनेन धर्मप्रतिष्ठादिपूर्वकं मानसिकजगति अपरिज्ञातनूतनतत्त्वविकाशनस्य आदर्श-

भावपद्धतेः शाश्वतप्रतिष्ठायाश्च मुख्यतः प्रतिपादकत्वं भगवदवतारस्य प्रयोजनं समुपलक्ष्यते ।

एतेन भगवदवतारस्य दुर्वृत्तनिधनधर्मप्रचाराद्यजनकत्वे "यदा यदा हि धर्मस्य" इत्यादिभगवद्वाक्यविरोधापत्ति"रित्यपि परास्तम्, तस्यापि गौणप्रयोजनत्वात् ।

वस्तुतस्तु विगतजीवनजडत्वपरित्यागेन विविधनूतनकर्मसम्पादन-संसूचितमानवसमुन्नतिवासरस्य मोहरजन्यवसानत उदीयमानज्ञानसवितृके प्रभाते विशेषविधानसर्जनैराध्यात्मिकचैतन्यविकाशनेन परमप्रयोजनीय-कर्मपद्धतिस्थिरीकरणेन च लोकशिक्षार्थमेव विधृतविविधकलेवरस्य भगव-दवतारस्य आवश्यकत्वम्, अन्यथा तन्निष्पादनासम्भवात् । अपि च बाह्यस्य जगतो व्यावहारिककर्मपद्धतेर्मानुषबुद्ध्यापि निष्पादनसम्भवात् तदर्थमेव नावतारस्य प्रयोजनम् ।

ननु उत्पत्तिविनाशशून्यस्य शाश्वतस्य भगवतो जन्मादिव्यापार-सम्वलित आविर्भावोऽनुपपन्नः, भगवन्नित्यत्वे तु श्रुतिरेव प्रमाणम् । अतः श्रुतिविरोधशङ्कया "लोकमङ्गलसाधनायाविर्भवति भगवान्" इति न शक्यते वक्तुमिति चेत् मैवं मंस्थाः, आविर्भावो हि न जन्मग्रहणम् । अपि तु तत्तत्कार्यसाधनोपयोगिविग्रहविशेषेण स्वशक्तेर्माहात्म्यप्रकाशनमेव । "श्रीकृष्णो जातः" इत्यादि-लौकिकव्यवहारस्तु औपचारिकः, न तु वस्तुगत्या जन्मग्रहणं भगवतः, तस्य नित्यत्वात् । आविर्भावेन च नित्यत्वव्याघातशङ्कावसरो नास्त्येव । तथाचोक्तं देवीमाहात्म्ये—

"देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा ।
उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ॥ इति ।

एवञ्च मानवसमाजमङ्गलकरपद्धतेः प्रतिष्ठानिष्पादनयोग्यवपुरास्थाया-विर्भूतो हि भगवान् कर्त्ता लोकहितस्य, स्रष्टा आदर्शचरितस्य, पाता सज्जन-निवहस्य, हर्त्ता दुष्टवर्गस्य, आहर्त्ता पुण्यराशेः, विधाता समाजसंस्थापन-रीतेः, विकाशयिता ज्ञानालोकसम्पातेन मानससारसस्य, तथा कारुणि-

कोऽपि साधितातिनिष्ठुरव्यापारः, कुकर्मरतोऽपि श्रेयस्करः, शुद्धचरितोऽपि पापाकुलितः, सत्यवागपि कूटसम्बद्धः, अरिष्टजनकोऽपि मङ्गलविधाता, वीतस्पृहोऽपि वि-भवाभिलाषः, चारुवपुरपि कुदृश्यप्रधानः, विशेषयति सामाजिकपरिस्थितिम्, प्रवर्त्तयति लोकमङ्गलसाधननिदानकर्मपद्धतिम्, स्थापयति सनातनधर्मम्, प्रवर्धयति आध्यात्मिकचैतन्यराशिम्, रक्षति च सज्जनवृन्दम्।

तथाहि अवलम्बितसुन्दरमत्स्यवपुषा निमज्जितानां सर्वधर्माश्रयीभूतानां वेदानामुद्धारः, विश्वविधारणक्षमकूर्मकलेवरमासाद्य पृष्ठदेशेन समुद्धरणं पृथिव्याः, वाराहमूर्त्या संक्षयेण हिरण्याक्षस्य, हिरण्यकशिपोर्वक्षोविदारण-मद्भुतरम्यभीषणेन नारसिंहेन कलेवरेण, वामनीं तनुमाश्रित्य छलनं बलि-राजस्य, पितृवधामर्षिणा भृगुपतिना त्रिःसप्तकृत्वो निःक्षत्रियत्वसाधनं पृथिव्याः, हरिसैन्यसाहाय्यमेत्य दिगन्तरानीतप्रचण्डतरुपाषाणादिबद्ध-जलनिधिना रामेण रक्षःकुलविनाशसाधनम्, भुवनमनोहरललितकान्ति-भाजा बलराममूर्त्या हलधारणम्, जीवदुःखविमोचनकृपापरवशेन बुद्ध-देवेन नूतनधर्मप्रचारः, कल्किरूपेण म्लेच्छनिधनमिति यद् यदवतारावतरण-मिह नारायणस्य, तथा प्रचण्डप्रतापपरितापितजगत्त्रयस्य दानवकुलस्य दलनाय क्षोभितवारिधितरङ्गसञ्जातसमावेशेन सम्भवदत्यद्भुतभाववर्त्तो-विस्मयजनकं मूर्तिधारणं भगवत्या इति सर्वमेवैतद्विश्वमङ्गलकरकर्म-सम्पादनसमर्थम्। इत्थञ्च—असत्यविदूरीकरणेन बाह्याध्यात्मिकभावयोः परिवर्द्धनेन त्रिभुवनशुभसाधनपरत्वमेवावतारप्रयोजनं प्रतियुगमुपलक्ष्यते।

इत्थञ्च यदैव विषमविपाकसमाकुलितमानवानां महानर्थकरसमय-समागमस्तदैव तत्प्रतीकारयोग्यरूपविशेषमास्थाय मर्त्यवसतामनिष्टसङ्घात-विमोचनायैवावतीर्णो भगवान् तत्तद्विपद्विनाशेन लोकानुपकरोति।

अयि भोः! साम्प्रतं हि विषमसङ्कटसागरनिमग्नानां परिप्राप्तानेक-दुःखसङ्कटापन्नजीवननिर्वाहपद्धतिकानां राजनैतिकार्थनैतिकादिनानासमस्या-समाकुलितानामस्माकं परमप्रयोजनीयतया प्रार्थनैषा लोकमङ्गलतत्परस्य

करुणासागरस्य मोहसुप्तिमग्नमानससारसविकाशनसवितुर्भगवतो विपद्-भञ्जनचरणारविन्देषु, यत् अये त्रिलोकपालन ! परित्रायस्व दुःखसिन्धु-तुङ्गतरङ्गसङ्घातचूर्णीकृतकलेवरान् अस्मान् दुर्गतान्। मङ्गलनिदान ! आविर्भूय कुरु मङ्गलं विपन्नानाम्। निर्जितदुष्टकुल ! सर्वशक्तिमन् ! देहि शक्तिमन्याय्यनाशाय शत्रुविनाशाय च। सर्वप्रेरक ! अनन्तप्रवाहिणीं सागरसलिलसंहतिमिव प्रेरय मानसेषु कर्मोद्यमस्पृहां प्रबलाम्। दुर्जन-शासक ! नाशय विद्वेषपरायणं सामाजिकानिष्टकारिक्रूरवर्गम्। विधृत-दुष्टनिग्रहविग्रह ? अवतर प्रलयकारिरौद्रवपुषा लोभसमाकुलचेतसां कर्तव्य-भ्रष्टानामाचारपरिवर्जितानां मिथ्याहङ्कारकारिणां दाम्भिकानां दम्भ-विनाशाय। दह वज्ररूपेण पाषण्डवर्गम्, संहर पिनाकित्रिशूलभयङ्कर-सुदर्शनचक्राघातेन धर्मध्वंसपरायणान् पामरान्। "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ! अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं"मिति तवैव वाणीमिमां स्मरन्तो भूयो भूयः प्रार्थयामहे, दुर्दिने अद्य भारतवर्षस्य त्वामन्तरा नान्या गतिरिति तथैव रूपेण पृथिव्यामागच्छ चक्रधारिन् ? यथा विषमसङ्कटकाले सारथ्यमर्जुनस्य, निधनं मुरशिशुपालकंसादीनां, वक्षोविदारणञ्च हिरण्यकशिपोः प्रतिपादितं त्वया। नमामि त्वां धर्मपालकम्, नमोऽस्तु ते दुष्टसंहाराय, नमोऽस्तु ते ब्रह्माण्डरक्षकाय।

वेदानुद्धरते जगन्ति वहते भूगोलमुद्बिभ्रते,
दैत्यान् दारयते बलिं छलयते क्षत्रक्षयं कुर्वते।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते,
म्लेच्छान् मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः॥

# मेघदूते नारीचित्रम्

[ निबन्धकः—काव्यव्याकरणतीर्थ-श्रीशिवशङ्करशास्त्री ]

पूर्वमेघे मेघस्य गमनपथनिर्देशप्रसङ्गेन विविधश्रेणीनां नारीणां प्रकृतिवर्णनं हि महाकवेः कवित्वशक्तेरपूर्वविजृम्भणम्।

भिन्नजातीयानां योषितां चरित्रवैशिष्ट्यविश्लेषणे महाकविना या नाम दर्शिता निपुणता, सा तु कालिदास एव सम्भाव्यते। यदा यदा हि तत्रभवता यद् यद्वस्तु परिगृह्यते, तत्तदेव तस्यालौकिककवित्वशक्तिप्रभावेन मूर्तिं परिगृह्य पाठकानां समक्षं विराजते। प्रत्येकञ्च मनोरममालेख्यमिव प्रतिभाति। महाकवेर्दिव्यतुलिकास्पर्शेन सर्वं सजीवं, सर्वं हृदयाकर्षकं सर्वं च विचित्रमभूत्। एवंविधस्तु न कुत्रापि लभ्येत। किञ्च जगति यत् यद्रमणीयम्, यद् यदनवद्यम्, तत्तदेव महाकवेर्वर्णनाविषयतामवगाहते। अन्यच्च—अननुकरणीया किल महाकवेर्वर्णनाशैली। एतादृशी शक्तिस्तु न कस्यापि कवेर्दृश्यते।

प्रथमं तावदङ्कितं तेन महाकविना प्रोषितभर्तृकायाः शोकावहमालेख्यमेकम्। यत्तु चित्रमङ्कितं तत्तु नूनमतीव हृदयद्रावि। अतस्तेषां शोकेन करुणार्द्रेणेव सता महाकविना पाठकाः श्राविता आश्वासजननीर्ललिताश्च वाणीः। गगने मेघस्य प्रथमाविर्भावदर्शनेन विरहिणीनां मनसि सञ्चारो जायते आशंसायाः प्रियतमेन सह तासां समागमोऽचिरेण भवितेति। अत उक्तं महाकविना—

त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसत्यः। (१।८)

वनिता जातानुरागा स्त्री। "वनिता जनितात्यर्थानुरागायाञ्च योषिति" त्यमरः। एताः प्रोषितभर्तृका दयितानां प्रत्यागमनं यावच्छरीरसंस्कारं न कुर्वन्ति।

"क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका ॥" इति वचनात् ।

किञ्च सिन्धुवर्णनाप्रसङ्गेन कविना कथितम्—

वेणीभूतप्रतनुसलिलाऽसावतीतस्य सिन्धुः
पाण्डुच्छायातटरुहतरुभ्रंशिभिर्जीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥

अत उक्तं सिद्धाङ्गनानां वर्णनाप्रसङ्गेन—

अद्रेः शृङ्गं हरति पवनः किं स्विदित्युन्मुखीभि-
र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः । (१।१४)

"अद्रेः शृङ्गमि"त्यनेन मेघस्याकृतेर्बृहत्त्वमवगम्यते । "मुग्धा" षोडश-वार्षिकी इत्यर्थो नात्र प्रतीयते । "मुग्धासु तपस्विकन्यकासु"—इत्यत्र मुग्धा षोडशवार्षिकीनि केचित् । अन्यच्च—

अम्भोबिन्दुग्रहणचतुरांश्चातकान् वीक्षमाणाः
श्रेणीभूताः परिगणनया निर्दिशन्तो बलाकाः ।
त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः
सोत्कम्पानि प्रियसहचरीसम्भ्रमालिङ्गितानि ॥ (१।२२)

नीरदगर्जनेन भीताभिः प्रियतमाभिर्दयितानामालिङ्गनमन्यत्रापि दृश्यते, तथाहि शिशुपाले—

प्रणयकोपभृतोऽपि पराङ्मुखाः सपदि वारिधरारवभीरवः ।
प्रणयिनः परिरब्धुमथाङ्गना ववलिरे वलिरेचितमध्यमाः ॥ (६।३८)

तथोक्तमृतुसंहारे महाकविनाऽपि—

पयोधरैर्भीमगभीरनिस्वनैस्तडिद्भिरुद्वेजितचेतसो भृशम् ।
कृतापराधानपि योषितः प्रियान् परिष्वजन्ते शयने निरन्तरम् ॥
(२।११)

अथेत्थं वर्णिता जनपदवनिताः कालिदासेन—

त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः । (१।१६)

लभ्यते चेदृशस्य सारल्यस्य भट्टिकाव्येऽपि परिचयः—

ह्रीभूषणं चेष्टितमप्रगल्भं चारूण्यवक्राण्यपि वीक्षितानि ।
ऋजूंश्च विश्वासकृतः स्वभावान गोपाङ्गनानां मुमुदे विलोक्य ॥ (२।१५)

जनपदवधूवर्णनं विधाय कविनैवं वनचरवधूगणमधिकृत्य कथितम् । आम्रकूटनिकुञ्जे वनचरयोषितः क्रीडन्तीति, नीचैर्गिरिवर्णनाव्याजेन कथितं कालिदासेन—

यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥

दरीगृहस्य वर्णनमन्यत्रापि दृश्यते । तथाहि—

वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥ (कुमार १।१०)

ततः श्रुतं पुष्पचायिकानां नारीणां वर्णनम् । ताः स्त्रियः कुसुमानि चित्वा चित्वा क्लान्ताः सञ्जाताः । आसां गण्डस्वेदापनयनेन कर्णोत्पलानि म्लानिमापन्नानि । अतः कविर्जलमुचं भणति—

"छायादानात् क्षणपरिचितः पुष्पलावीमुखानामिति" (१।२७)

अधुना कविनोज्जयिन्याः पौराङ्गणानां चित्रमङ्कितम् । 'विद्युल्लता आसां नयनेषु स्फुरति । अतः कविर्मेघं ब्रवीति—

"लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि । (१।२८)

अतः परमस्माभिर्महाकालस्य मन्दिरे नृत्यन्त्यो गणिका अवलोकिताः—

पादन्यासक्वणितरशनास्तत्र लीलावधूतै
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान प्राप्य वर्षाग्रबिन्दून
आमोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान ॥ (१।३५)

एतेन दैशिकं त्यनृ सूचितम् । तदुक्तं नृत्यसर्वस्वे—

"खड्गकन्दुकवस्त्रादिदण्डिकाचामरस्रजः।
वीणाञ्च धृत्वा यत् कुर्यान्नृत्यं तद्दैशिकं भवेत् ॥

चामरव्यजनदृश्यं महाकवे रचनान्तरेष्वपि दृश्यते—

तथाहि—१। व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि (विक्रमोर्वशी ४।४)।

प्रियाकृतनखक्षतस्योल्लेखो बहुस्थलेषु काव्ये दृश्यते—

१। प्रणयिनीव नखक्षतमण्डनम्—(रघु ९।३१)

२। सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् (कुमार ३।२९)।

अपिच—वीणाक्षतस्यापि दृश्यतेऽन्यत्र निदर्शनम्—

"वेणुना दशनपीडिताधरा वीणया नखपदाङ्कितोरवः (रघु १९।३५)

नारीणां दीर्घकटाक्षाः काव्येषु भ्रमरश्रेण्या तुलिता भवन्ति, कनीनिकानां कृष्णवर्णत्वात्। तथाहि रघौ—"विलोलनेत्रभ्रमरैर्गवाक्षाः" (७।११)। इति।

उइल्‌सनमहोदयेनात्रोक्तम्—"Although this allusion may be new to European imagery, it is just and pleasing. The consequence of the glance is well convered by the sting of the bee, while its poetically radiating nature is not unaptly compared to the long flight of a line of these insects. The lengthened light of a glance is familiar to us, for Shakespeare speaks of "eyes streaming through the airy region" and continuous flight of bees was noticed so long back as the time of Homer, who describes them as proceeding in branches."

सम्प्रति नगरदृश्यवर्णनव्यपदेशेन कविना अभिसारिका वर्ण्यन्ते—

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः।
सौदामिन्या कनकनिकषस्निग्धया दर्शयोर्वीं
तोयोत्सर्गस्तनितमुखरो मास्म भूर्विक्लवास्ताः ॥ (१।३७)

अभिसारिकोक्ताऽमरे "कान्तार्थिनी तु या याति सङ्केतं साभिसारिका"।

(१) रुद्धालोके निरुद्धदृष्टिप्रसारे इति मल्लिनाथः ।

तदुक्तं कुमारे—'रजनीतिमिरावगुण्ठिते पुरमार्गे घनशब्दविक्लवाः ।
वसतिं प्रिय कामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वरः ॥ (४।११)

(२) सूचिभेद्यै—इत्यत्र 'अतिनिविडत्वात्तमसां कविसमये सूचिभेद्यत्वमिष्यते, इति केचित् ।

(३) अभिसारिकाणां विद्युद्दर्शितेन पथा दयितमन्दिरगमनं कवयो वर्णयन्ति । तद् यथा ऋतुसंहारे—

सुतीक्ष्णमुच्चैर्ध्वनतां पयोमुचां घनान्धकारावृतशर्वरीष्वपि ।
तडित्प्रभादर्शितमार्गभूमयः प्रयान्ति रागादभिसारिकाः स्त्रियः ॥ (२।१०)

मृच्छकटिके —(इयं विद्युत् ) आख्याति ते प्रियतमस्य हि सन्निवेशम् ।

तत्रैव च—जलधर निर्लज्जस्त्वं यन्मां दयितस्य वेश्म गच्छन्तीम् ।
स्तनितेन भीषयित्वा धाराहस्तैः परामृशसि ॥ (५।२८)

अपिच—अलकावर्णनप्रसङ्गेन कविना लिखितम्—

गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः
पत्रच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च ।
मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैश्च हारै-
र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥

अत्रापि उइल्सनमहोदयेनोक्तम्—

"The Hindus always send the lady to seek her lover and they usually add a very reasonable degree of ardour and impatience."

ऋतुसंहारेऽपि दृश्यते—

निपातयन्त्यः परितस्तटद्रुमान् प्रवृद्धवेगैः सलिलैरनिर्मलैः ।
स्त्रियः प्रकामा इव जातविभ्रमाः प्रयान्ति नद्यस्त्वरितं पयोनिधिम् ॥
(२।७)

अन्ततश्च खण्डिता नायिका परिदृश्यते—

तस्मिन् काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु।
प्रालेयास्रं कमलवदनात् सोऽपि हर्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥ ( १।४० )

तथा च खण्डितालक्षणं दर्पणे—

पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ॥

एवं महाकविः स्वस्यासामान्यकवित्वशक्तिप्रभावेन यानि नारीचित्राण्यङ्कितानि, तानि तत्त्वतो मनोरमाणि। एतन्मनोहरालेख्यजातदर्शनेन कस्य सचेतसश्चित्तमानन्दरसेनाप्लुतं न भवति ? कस्य वा काव्यरसिकस्य शिरो महाकवेश्चरणतले नावनतं भवति, कस्य च वङ्गवासिनोऽञ्जलिबद्धेन करद्वयेन तमुद्दिश्य श्रद्धापुष्पाणि न प्रदीयन्ते।

---

# व्याकरणोपयोगित्वम्

[ निबन्धकः—श्रीचित्तरञ्जनव्याकरणतीर्थः ]

अयि भोः! सुरभाषाविलासनिपुणा विदितशब्दवृत्तान्ताः सर्वतत्त्वज्ञा गुणज्ञाः पण्डिताः! सुविदितमस्त्येव परिज्ञातशब्दव्युत्पत्तिसाधनप्रयोजनज्ञानानां पण्डितप्रवराणां भवतां यद् विश्वविधात्रा विचित्रचित्रितं विविधवैचित्र्यपूर्णमिदं जगद् नियमविशेषेण सुनियन्त्रितमिति।

अनुभूयमानानां जागतिकतत्तद्भावपद्धतीनां विधानपरतामवलोकयतां केषां पुनर्मनीषिणां निखिलमेव वस्तुजातं नियमानुगमिति चिन्तापद्धति-

मनसि पदं नादधाति ? अशक्यकल्पनां जगत उन्मार्गगामितां भावयितुमपारयतामादर्शस्वरूपां विश्वविधातृनिर्दिष्टनियमाधीनां जागतिकपरिस्थितिमवलोकयतां सुतरामेव बाह्यजगतीव विविधमनोहरभावसमृद्धिसमृद्धे भाषाजगत्यपि विशेषविधानतत्परता नियतमावश्यकीति नरीनृत्यते भावधारा चेतःसु। तादृशविधानतत्परता पुनर्व्याकरणेनैव निर्वहतीति निर्विवादम्। व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति सार्थकव्युत्पत्तिकस्य व्याकरणस्य भाषानियन्त्रणमेव प्रयोजनम्। अत एव शब्दप्रतिपादकत्वादिदं शब्दानुशासनमित्यभिधीयते विद्वद्भिः। विविधविज्ञानप्रदीप्तधिषणानां जगद्वन्दितपदारविन्दानां विद्वद्वराणां परमरमणीयस्य निबन्धनिचयस्य विशेषतो ज्ञानरत्नाकरस्य अस्माकं सर्वधर्माश्रयीभूतस्य वेदस्य च मुखं व्याकरणं स्मृतम्। ज्ञानातिशयसमुद्भूतस्य भावादिलालित्यमाधुरीभिः श्रोतृश्रुतिषु पीयूषधारानिःस्यन्दिनः साहित्यादिप्रबन्धरूपस्य रम्यविशालमन्दिरस्याभ्यन्तरे प्रविविक्षोर्व्याकरणरूपसिंहद्वारातिक्रमणमतीव प्रयोजनीयतां धत्ते। वाणीचरणसरोजमधु पिपासुभिर्भक्तमनोरञ्जनं भारतीधवलचरणशतदलं भावविशदचन्दनचर्चितं रुचिरवाक्यप्रसूनाञ्जलिभी रञ्जयितुमिच्छुभिरतिक्रम्य व्याकरणसिंहद्वारं क्रमेण प्रविष्टपवित्रभाषाविशालमन्दिराभ्यन्तरैः स्वरचितमञ्जुलप्रबन्धसम्भारैरलङ्कृता नितरामेव समधिकसुषमापन्ना भारती संवर्द्धयति तान् तनयान्। विद्याविनोदनपरायणास्त एव प्रकृत्या मातृभक्ता ये सुविशालसिंहद्वारेण मनोरमं मन्दिराभ्यन्तरमुपेत्य वाणीदेव्याः कुन्देन्दुतुषारधवलं चरणपङ्कजं सुविशुद्धप्रबन्धपुष्पाञ्जलिभिर्मण्डयितुमर्हन्ति। अवलम्बिताप्रशस्तपन्थानोऽनतिक्रान्तसिंहद्वारका देवीमन्दिरं कलुषीकृत्य व्याकरणविरुद्धया पदकदम्बमालया देवीपदं कलङ्कयन्ति नराधमाः।

सज्जनचित्तविनोदनैकोपायस्य विद्याविपिनमञ्जुलकुञ्जमधिवसद्भिर्विरचितस्य ललितभाषामाधुर्येण मनीषिमनोहरणसमर्थस्य साहित्यजातस्य विविदिषा विरहितव्याकरणज्ञानानामन्धस्य हस्तिदर्शनमिव, गहनतमसि प्रदीप-

मन्तरा विलोकनप्रचेष्टेव च प्रतिभातीति सुष्ठूक्तं केनचिद् महात्मना, "अवैयाकरणस्त्वन्ध" इति। साध्वसाध्विति द्विविधभेदमुपगताया भाषाया लिखनपठनादिषु साधुत्वस्यावश्यकतया नितरामेव प्रयोजनं व्याकरणस्यैव। कथनीयायां भाषायान्तु न तादृशं समुपयोगित्वं व्याकरणस्य परिलक्ष्यतेऽस्माभिः। विशालकुलसमुद्भूतस्य स्वाकृतिमलिनीकृतमनोज्ञस्य बालकस्य चक्षुर्हीनतेव विविधभाषासमृद्धस्य साहित्यजातस्य शब्दानुशासनराहित्यं सामाजिकैः परिनिन्दनीयमिति। अज्ञातशब्दव्युत्पत्तिकानां नितरामेव सुसंश्लिष्टपदार्थावबोधाक्षमाणां सुसम्बद्धपदकदम्बविलसद्धर्मशास्त्रादीनामपि मर्मार्थग्रहणाक्षमतया तेषु स्वीयबुद्ध्यनुसारतः कृतोऽर्थो धर्म्यकर्मणां विघातायैव भवति। संसारवासनाविरहितस्य मुमुक्षोः "श्रोतव्यो मन्तव्यः" इत्यादिश्रुत्यनुसारेण आत्मसाक्षात्कारं चिकीर्षतः प्रथममेव श्रुतिवाक्येभ्य आत्मविषयकस्य श्रवणस्यावश्यकतया नितरामेव तत्र शब्दज्ञानं परमप्रयोजनीयम्। शब्दज्ञानं पुनर्व्याकरणज्ञानात् समुत्पद्यत इति आत्मसाक्षात्कारं प्रत्यपि व्याकरणमेव प्रयोजकम्। व्याकरणस्य शब्दज्ञानजनकत्वं पुनः प्राचीनैरुक्तम्, तथाहि "शब्दग्रहं व्याकरणोपमान-कोषाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥" इति। इत्थञ्च आत्मसाक्षात्कारप्रयोजकत्वं सिद्धं व्याकरणस्य। श्रुत्यङ्गत्वमपि निर्णीतमस्य शास्त्रेषु। तथाचोक्तं "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः। ज्योतिषां निचयश्चैव वेदाङ्गानि वदन्ति षट्॥" इति। अपि च विदितशब्दरहस्यस्य शब्दज्ञानादेव भवति सर्वसिद्धिः, तथञ्चोक्तं "एकः शब्दः सुप्रयुक्तः सम्यग् ज्ञातः स्वर्गे लोके च कामधुक् भवती"ति।

अयि विज्ञाः, विविधज्ञानरत्नाकरस्य भारतवर्षस्यास्य शास्त्रनिचयसमुज्ज्वलज्योतिष्कमालाविमण्डिते सांख्यवेदान्तादिप्रदीप्तनक्षत्रसमुद्भासिते भाषानभोमण्डले जनमानसानामशेषशान्तिविधायको वेदः सुधाकरायते। सूर्यस्तत्र व्याकरणं पदार्थनिचयप्रकाशकत्वात्। एवञ्च गहनभावतिमिरसमाच्छादितशास्त्रमार्गविचरणाभिलाषभाजामविरतदुरधिगमपदोपलसकल-

सम्भावितपदस्खलनानामभिमतफलप्राप्तिपरिपन्थिप्रत्यूहव्यूहविध्वंसपटीयसी व्याकरणसवितृदीधितिरत्यावश्यकीति नास्त्यत्र सन्देहलेशावसरः। किं बहुना, परिलक्ष्यते च सर्वदर्शनसंग्रहान्तर्गतपाणिनिदर्शने—"प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः" इति। अतः सामान्यतः शब्दानुशासनप्रयोजनकत्वेऽपि व्याकरणस्य वेदनिबद्धपदार्थबोधपूर्वकब्रह्मसाक्षात्कार एव परमं प्रयोजनमिति। तथाहि "नाकमिष्टसुखं यान्ति सुयुक्तैर्बद्धवाग्रथै" इति। नन्वचेतने शब्दशास्त्रे नैतत् सामर्थ्यमस्तीति चेत् मैवम्, महता देवेन साम्यश्रवणात्। तथाहि—

"चत्वारि शृङ्गाणि त्रयोऽस्य पादाः, द्वे शीर्षे सप्त हस्तासो अस्य, त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश" इति। तत्र भाष्यकारः "चत्वारि शृङ्गाणि" चत्वारि पदजातानि नामाख्यातनिपातोपसर्गाः, "द्वे शीर्षे" द्वौ नित्यानित्यात्मानौ, "सप्त हस्तासः अस्य" तिङा सह सप्त सुब्विभक्तयः। "त्रिधा बद्धः" उरसि शिरसि कण्ठे च बद्धः, वृषभो रोरवीति शब्दं करोति, "महो देवः" महादेवः, "मर्त्यां" मर्त्यलोकाः, तान् आविवेश इति व्याकार्षीत्।

इदमाद्यपदस्थानं सिद्धिसोपानवर्णनम्।
इयं सा मोक्षमार्गाणामजिह्मा राजपद्धतिः॥

तस्मात् सकलशास्त्रगूढार्थप्रकाशद्वारा विमलज्ञानसम्पादकत्वेन निखिलदुःखविनाशनपरमेश्वरपादसरोजाराधनसाधनतया व्याकरणमेव अध्येतव्यमित्यलमतिपल्लवितेनेति शम्।

# धनविद्ययोः पार्थक्यं

[ निबन्धकः—श्रीवरदाचरणस्मृतिरत्नः ]

धनादरो निर्धनसन्निधाने विद्या तु सर्वत्र समादरार्हा ।
धनार्जने क्लिश्यति लोकसङ्घो विद्यार्जने दुःखमपीह शर्म ॥
रक्षिप्रयोगेण धनं हि रक्षति विद्या स्वयं जीवनमप्यपायात् ।
छलेन चौरैरपि नीयते धनं विद्या तु केनापि न नेतुमीश्यते ॥
प्रायः प्रदानेन हि निर्धनो धनी विद्याऽनवद्या परिवर्द्धते परम् ।
संख्येयमास्ते धनगौरवं नृणां विद्यागुरुत्वन्तु न चावगम्यते ॥
धनी भवेन्निष्ठुरचित्तगर्वितो विद्वांस्तु नम्रो विनयी सुभाषी ।
पण्येन लभ्यो मणिरप्यनर्घो विद्या तु नो लक्षधनप्रदानैः ॥
धनी हि बोध्यो बहुमूल्यवेशैर्विद्वानवेशोऽपि सुनीति-वाचा ।
धने प्रयाते धनिकोऽस्ति भिक्षुको विद्वांश्चिरेण स्वधनाधिकारी ॥
विदेशयाने धनिको विपद्भाग् विद्वांस्तु विद्या-सुहृदा प्रमोदी ।
येषां धनं भूरिरिपुश्च तेषां यस्यास्ति विद्या बहु तस्य मित्रम् ॥
धनिप्रशंसाश्रृणवांश्च गायति विद्वत्प्रशंसां जगदेव सन्ततम् ।
धनी धनं श्लाघत एव सर्वदा विद्वांस्तु विद्यां न कदापि निर्मलः ॥
विद्यावताऽर्थो बहुशोऽपि लभ्यते विद्या तु तादृग् धनिना न केनचित् ।
अतो हि विद्यां विमलां गरीयसीं मन्ये धनाच्छ्रेष्ठतमादपि क्षितौ ।

# प्रमोदलहरी

( १ )

[निबन्धकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायशास्त्री एम. ए.]

द्वौ पथिकौ यदृच्छया विचरन्तौ रक्षोराजपुरम् आसादयामासतुः। तत्र च तदात्व एव राक्षसराजाज्ञया गृहीतौ कारायां च विनिक्षिप्तौ। अन्येद्युश्च प्रातः "गच्छतं फलान्याहरतम्" इति राज्ञा समाज्ञप्तौ वनमध्यं प्रविविशतुः। ततश्च यथाकालं प्रत्यावृत्तः प्रथमो राक्षसाधिपतेः पुरतो मृद्वीकास्तवकानि स्थापितवान्।

पृष्टश्च राज्ञा "किमानीतं त्वया" इति।

तेनोक्तं "मृद्वीका" इति

"सम्यक्! अविभज्यैव भक्षय।"

आदेशसमनन्तरं चोच्चैर्हासः समश्रूयत। रुष्टेन च राज्ञानुयुक्तम्—किमिति प्रहससि।

"मर्षयतु मर्षयतु भवान्। अहं सहचरस्य समवस्थां विचिन्तयन्नासम्। तेन हि नालिकेरफलान्यानीतानि" इति।

( क्रमशः )

# संस्कृतसाहित्यपरिषत

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| July, 1938 | १८६०-शकीये आषाढे<br>२१श-वर्षस्य ३य-संख्या | Vol. XXI, No. 3 |


## प्रशान्तरत्नाकरम्

(पूर्वानुवृत्तम्)

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

( ततः प्रविशति स-वसन्तको राजा )

वसन्तकः—भो वयस्य, एषा सा पुष्पवाटिका, तदेहि प्रविशावः ।

राजा—अहो रामणीयकं पुष्पवाटिकायाः !

एषा पुष्पनिलीनभृङ्गनिचया वल्ली स्थिता तोरणे
वातोद्वर्तितपल्लवा सविनया सम्भाषमाणेव माम् ।
प्रत्युद्गच्छति पुष्पवृष्टिभिरलं सम्पूजयन्ती तथा
चित्रं चेतनकृत्यमद्य कुरुते निश्चेतना वल्लरी ॥

तद् यावत् प्रविशामि । ( उभौ प्रविशतः ) ।

वसन्तकः—भो वयस्य, एतत् पन्थानमुभयतः स्थितमशोकलतायुगल-मालोकय । अहो लोकोत्तरं लावण्यमशोकस्य !

राजा—वयस्य, पश्यामि,

एषा प्रसूनस्तनभारनम्रा सुश्यामलाऽशोकलता सुरक्ता ।
नतेव कान्ता तरुणी मनो मे विदूनमेतद् विदधाति शान्तम् ॥

वसन्तकः—भो वयस्य, इतोऽपि पश्य, एषा कुरुवकश्रेणी, इयं बकुल-श्रेणी, इमे नवकिशलयरमणीया रसालपादपाः, इमाश्च विविधप्रसूनसमलङ्कृता वल्लर्यः ! नूनमिदं नन्दनादप्यधिकमानन्दनं मे प्रतिभाति ।

राजा—वयस्य, युक्तं ते प्रतिभाति, तथाहि

पुष्पाण्यसंख्यानि कसन्ति नन्दने
सुराङ्गनाश्चापि लसन्ति नन्दने ।
अनुत्तमा सृष्टिरसौ प्रजापते-
र्लीलावती तत्र परं न राजते ॥

तत् क नु साम्प्रतं लीलावतीं प्रेक्षिष्ये ?

वसन्तकः—( परिक्रम्य दृष्ट्वा ) भो ! वयस्य, दिष्ट्या वर्द्धसे ।

राजा—कथमिव ?

वसन्तकः—एषा ससखीजना लीलावती प्रसाध्यमाना किमपि चिन्तयन्ती माधवीकुञ्जमधितिष्ठति, तदेहि ।

यूथिका—सखि, अपि चिन्तिता गीतिका ?

लीला—अथ किम् ।

राजा—वयस्य, गीतं प्रवर्तते, तत् क्षणं प्रतिपाल्य प्रविशावः ।

( अन्तराले तिष्ठतः )

यूथिका—तदिदानीं स्वरसंयोगेन गीयताम्, येन शब्दगुणकमाकाशमयं श्रोत्रं सार्थकगुणं सम्पद्येत ।

लीला—त्वमपि वीणातन्त्रीं परिवर्त्तय, येन झङ्कारः समलङ्कारो भविता ।

यूथिका—यथाज्ञापयति प्रियसखी (वीणां गृहीत्वा वादयति ) ।

लीला—( गायति )—

( गीतम् )

वसन्तकं वीक्ष्य मनो मम हि चञ्चलम् ।
सहते नहि पिकरुतमिह कुसुमकोमलम् ॥
एहि दयित मानसे चिरसञ्चिततप्रसे ।
दूरे कथमसि निष्ठुर वितनु मङ्गलम् ॥
मनसिजशरताडिता क नु गच्छतु बाधिता ।
करुणा तव दीनशरण परमसम्बलम् ॥

वसन्तकः—अब्रह्मण्यं भो अब्रह्मण्यम् ! ( सहसा लीलावतीमुपसृत्य ) भद्रे लीलावति, एष दरिद्रब्राह्मणः पादयोस्ते पतति, अनुकम्प्यतामयं वराकः, एष राजा मे प्रियवयस्यो वर्तते, अस्मिन्नेव ते देवताजनदुर्लभं प्रेमाणमावर्जय, एष पुनर्हीनो ब्राह्मणबन्धुरेकस्या एव प्रणयेन तथा संवृत्तो यथा स्मर्तुमपि नालमन्यस्याः प्रणयस्य ! यदि सा चण्डी लेशतोऽपि वृत्तमिदं जानीयात्, तदा श्मश्रूणि कुन्तलाश्च मे निरन्वयं विनाशं गच्छेयुः । तदनुकम्प्यतामेष तपस्वी ।

यूथिका—अये, वयस्यो वसन्तकः ! ( दृष्ट्वा ) अहो, दूरे भर्तापि ! सखि दिष्ट्या वर्द्धसे ! एष वयस्यो वसन्तकः, अदूरे भर्ता च ।

लीला—कथं महाराजः ! तत् कथमेवं वसन्तकः क्रोशतीति नावधारयामि ।

राजा—(स्वगतम्) अहो मुग्धता वसन्तकस्य ! प्रियया लीलावत्या वसन्तमृतुमधिकृत्य कृतेऽपि सङ्केते स्वनाम्ना भ्रान्तः क्रोशति । भवत्वेवं तावत् । (प्रकाशम्) वयस्य, अप्येतन्निदर्शनं भवतो बाल्यतः प्रभृति निरूढस्य वयस्यभावस्य ? धिग् वञ्चितोऽस्मि चिरं कपटपटुना पयोमुखेनेव विषकुम्भेनानेन !

वसन्तकः—भो वयस्य, प्रसीद, प्रसीद, एषोऽहं पवित्रसूत्रं स्पृष्ट्वा शपे, नाहमस्य प्रेमवृत्तस्य कथामपि जानामि ।

लीला—आम् ! वसन्तक इति नाम्नैव वयस्यो भ्रान्तः ! अहो समुज्जीवितास्मि ! राज्ञो वचनादहमपि तदा भीता संवृत्तास्मि ।

राजा—कः प्रत्ययः ?

वसन्तकः—पृच्छ्यतामेषा लीलावती कदापि मम मर्यादातिक्रमं दृष्टवती न वेति ?

राजा—भोः कापटिक ! चौरव्यवहारे चौरान्तरस्य साक्षितां न खल्वर्थशास्त्रमनुमन्यते ।

वसन्तकः—हा हतोऽस्मि, तत् को वा अपरो मम निर्दोषतायां साक्षी भविष्यति, हा हा हतोऽस्मि । हा ब्राह्मणि ( रोदिति ) ।

राजा—अहो महद् वैक्लव्यं गतो मे प्रियवयस्यः, तदस्य सत्येन शान्तिमुत्पादयामि । ( प्रकाशम् ) भो वयस्य, भ्रान्तिमुपगतोऽसि ।

वसन्तकः—( सरोदनम् ) कथमिव ?

राजा—एषा सङ्गीतं कुर्वती लीलावती वसन्तमृतुमधिकृत्य वसन्तक इत्याह, न तु वसन्तकं मे प्रियवयस्यम्, तदलं वैक्लव्येन । कौतुकेन च मृषैव मया दूषितोऽसि ।

लीला—सुतराम् ऋजुक एष ब्राह्मणः ।

वसन्तकः—आम् एवम् ? अहो निर्वृतोऽस्मि, अपगतो मे शीर्षात् सुमहान् पर्वतभारः । तदिदानीं लीलावत्याः सुधास्यन्दिना सङ्गीतेन स्मृतेन परं सन्तोषमुपलभे ।

राजा—प्रिये लीलावति, किमिदानीं तूष्णीम्भवसि ?

सङ्गीतेन सुधारसेन सुचिरादाप्लावयन्ती नभः
शान्तिं कामपि देवताभिलषितां सम्पादयस्वान्तरे ।
नृत्येनापि विलक्षणेन नयनं सम्प्रीणयस्वाञ्जसा
लज्जानम्रमुखं त्वया जितगुणा देवाङ्गना वृण्वताम् ॥

लीला—शठ, अलमेतेन कपटप्रणयनिवेदनलाघवेनावलामिमां वञ्चयित्वा । गच्छ तस्या एव सङ्गीतश्रवणाय, या किल तावत्कालं समाराधिता ।

राजा—प्रिये, किमेवं वदसि ?

त्वं जीवितं मम कथं कुपितासि तन्वि
प्राणांस्त्वदेकशरणान् परिरक्ष तुष्टा ।
का वाऽपरा प्रणयिनी भवतीं विना मे
यस्या भ्रमे निपतितासि शुभे प्रसीद ।

तदिदानीम्—मानं जहीहि कुरु कोमलदृष्टिपातं
प्रेम्णा समेत्य कृपया सुपरिष्वजस्व ।
विच्छेददावदहनेन सुदीर्घकालं
दग्धं मनो मम शमं प्रतियातु दिष्ट्या ।

वसन्तकः—भद्रे, उपसर्प, स्वेच्छया करोपनतः स्वर्गो न हातव्यः। हा हा कियता भाग्येन स्त्री भवति ?

राजा—वयस्य, ननु लीलावती भवतीति वक्तव्यम् ।

वसन्तकः—आम् एवम् ।

यूथिका—अहो भर्तुः सख्यां मे अनुरागविशेषः ! सखि, नातः परमपि मानं कर्तुमर्हसि । तत् प्रसीद ।

लीला—अहो, बलात्कारेण मानं प्रदर्शयन्ती नातः परमपि मानं रक्षितुमर्हामि । तदेवं तावत् कथयिष्ये । (प्रकाशम्) यूथिके, अथ यदि राज्ञो मयि न कपटप्रणयस्तदा कुतोऽद्यापि स मे हीरकहारो यः पूर्वं पञ्चमदिवसे मया याचितः ?

राजा—आम् ! ज्ञातम् ! अत एवायमभिमानः ! प्रिये, मानं जहिहि, अद्यैवायम्प्रियायाः कण्ठसङ्गेन स्वं वर्द्धयिष्यति ।

लीला—अहो प्रीतास्मि, हृदयेश्वर, दासीमिमां क्षन्तुमर्हसि, एषाहमपराद्धा प्रणिपातेन भवन्तं प्रसादयामि ( प्रणमति )।

राजा—न भूमिपातस्तव युज्यते प्रिये तवासनं योग्यमुरःस्थलं हि मे ।
तदेहि कामेश्वरचित्तदेवते कृपावती भूरि परिष्वजस्व माम् ॥

( उत्थाप्य परिष्वजते )

लीला—( जनान्तिके ) आः ! किं करोषि ? एष वसन्तकः, एषा च सखी मे यूथिका प्रत्यक्षं पश्यतः ।

राजा—( जनान्तिके ) प्रिये, रमणीयमेतयोः प्रच्छादनोपायं कथयामि, एतौ तीव्रां सुरां पाययित्वा विवशीकृत्य निरन्तरायं यथाकामं विहरिष्यावः । तदेवं करोमि । ( प्रकाशं ) वयस्य, वसन्तक, रमण्या नृत्यं सङ्गीतञ्च सुरां विना न मे स्वदेते । तत् सुरामेव समादिशामि । कः कोऽत्र ?

प्रविश्य प्रतीहारी—आज्ञापयतु देवः ।

राजा—उच्यतां सुराधिकृतः पुरुषः, एष महाराजः सुरया सह त्वामचिरं द्रष्टुमिच्छति इति ।

प्रतीहारी—यथाज्ञापयति देवः (निष्क्रान्तः ) ।

( ततः प्रविशति सुरामादाय सुराधिकृतः पुरुषः )

पुरुषः—देव, एषा राजपेया सुरा, पातुमर्हति देवः ।

( सुरापात्रमुपनयति )

वसन्तकः—अब्रह्मण्यं भो अब्रह्मण्यम् ।

सर्वे—( ससम्भ्रमास्तिष्ठन्ति )

राजा—किन्नु खल्विदम् ?

वसन्तकः—अपि नाम राज्यमिदमराजकं संवृत्तम् ।

राजा—कथमिव ?

वसन्तकः—न चेदराजकं राज्यम्, कथन्तर्हि पुरुषः सुरामुपनयति ? पश्यन्त्याः कामिन्याः पुरुषेणोपनीतया सुरया पुरुषो दण्डमर्हति ।

पुरुषः—वयस्य, वसन्तक, अनपराद्धोऽहं राजादेशादुपनीतवानस्मि ।

राजा—भवतु अलमाशङ्कया, गच्छ त्वम् । सुराभाण्डमिहैव स्थापय ।

पुरुषः—यथाज्ञापयति देवः ( निष्क्रान्तः ) ।

राजा—प्रिये लीलावति, एहि यावदिदानीं त्वया सहैव सुरां पीत्वा त्रिदिवानन्दमभिविन्दामि । तथाहि—

यावत् सुरायां दयितानस्य
संक्रान्तिमायाति न रम्यगन्धः।
तावत् सुराया विफलैव जाति-
र्न कामिनां तत्र रसो विभाति।

लीला—अहो अनुगृहीतास्मि ( एकपात्रे सुरां पिबति )।

राजा—( वसन्तकं सुरां पाययितु लीलावत्याः संज्ञां ददाति )।

लीला—वयस्य, वसन्तक, त्वया अनुपयुज्यमाना चेद् विफलैव सुराजातिः, तदिमां पानेन अनुग्रहीतुमर्हसि।

वसन्तकः—भद्रे लीलवति, कथमद्यैव तवेदृशी मतिः प्रादुर्भूता ?

लीला—यत एतावत्कालमप्रबुद्धा अद्य सहसा प्रबुद्धाऽस्मि। तदुपयुज्यताम् ( पात्रमुपनयति )।

वसन्तकः—अहह ! भद्रे, तिष्ठ, तिष्ठ, ब्राह्मणस्य मे सुतरां विरुद्ध एष आचारः। तद् विरम।

राजा—( नयनसङ्केतेन लीलावतीं तथैव आदिश्य ) वयस्य, त्वं प्रत्यहं 'शौण्डिकानां करस्पृष्टेन जलेन निर्मितां सुरामहं पिबामि' इति कृत्वा मामधिक्षिपसि, अद्य तु तीर्थजलेन ब्राह्मणीभिरेव सुरां कारितवानस्मि, तदतः परं न मामधिक्षेप्तुमर्हसि।

लीला—अहो निपुणवादिता स्वामिनः !

वसन्तकः—आम् एवम् ? तदतः परं तवाधिक्षेपाद् विरता भविष्यामि।

लीला—वयस्य, वसन्तक, एषा सुचिरं पानपात्रे स्थिता प्रकर्षं जहाति, तदविलम्बितं पीयताम्, अन्यथा नाहं मुञ्चामि।

यूथिका—महाब्राह्मण, पीयतां, सौभाग्यादिदमीदृशं लभ्यते।

वसन्तकः—आ दास्याः पुत्रि, किं मया दरिद्रब्राह्मणेन सुरया उन्मादितेन।

राजा—वयस्य, ससखीजना लीलावती प्रीता भवति, तत् सकृत् पीयताम्। अनन्तरं लघुना प्रायश्चित्तेन पापं क्षालयिष्यसि।

वसन्तकः—सत्यं ब्राह्मणीभिस्तीर्थजलेन निष्पादितैषा ?

राजा—अथकिम् ।

वसन्तकः—भवतु तिष्ठ क्षणं यावद् ब्राह्मण्यं दूषणाक्रमणात् परिपालयामि । (यज्ञसूत्रं कर्णलम्बितं कृत्वा ) इदानीम् उपनय, का गतिः ?

लीला—वयस्य, महानन्दं लप्स्यस इति सकृत् पीत्वैव ज्ञास्यसि (उपनयति) ।

वसन्तकः—अहह ! तीव्रो गन्धः, न सोढुं शक्यते, भद्रे, लीलावति, किमेष ते महानन्दस्य समारम्भः ?

लीला—वयस्य, दुःखं विना सुखं दुर्लभमेव, तदत्रापि आदितस्तीव्रेण गन्धेन किञ्चिद् दुःखम्, अनन्तरं परमानन्दः !

वसन्तकः—सत्यम् ? वयस्य, अपि सत्यम् ?

राजा—अथकिम् ।

वसन्तकः—भद्रे, दीयतां, नासानिरोधेनापि पिबामि ! कुतः खलु परीक्षां विना तत्त्वसिद्धिः ? (तथा पिबति) ।

लीला—अहो कृतार्थास्मि ।

वसन्तकः—अहो तीक्ष्णता मधुरता च मदिरायाः !

राजा—वयस्य, कथं मन्यसे ?

वसन्तकः—नितरामानन्दमनुभवामि ।

राजा—उत्तरोत्तरं स एष वृद्धिमेव यास्यति । प्रिये, पुनरपि वयस्याय सुरां यच्छ (सुरां पिबति) ।

लीला—तथा ( सुरां ददाति ) ।

वसन्तकः—वयस्य, आनन्दसागरे मग्नोऽस्मि, सर्वत एव परमानन्दतरङ्गाः प्रतिभान्ति । भद्रे लीलावति, गीयतां पुनरपि गीयताम्, अहं नर्तितुमिच्छामि ! भोः वयस्य, किमेवं तूष्णीं वर्तसे ? उच्यतां लीलावती, गीयतां नृत्यतामिति । अहमपि एतया सह ताललयशुद्धं सङ्गीतं नृत्यञ्च करिष्यामि ।

( क्रमशः )

---

# कमलाकान्तस्य पत्रपेटिका

( पूर्वतोऽनुवृत्ता )

[ निबन्धकः—श्रीक्षितीशचन्द्रचट्टोपाध्यायः, शास्त्री एम. ए. ]

## प्रथमा

### एककः

"कोऽसौ गायति ?"

सुचिरविस्मृतस्य सुखस्वप्नस्य स्मृतिरिव मञ्जुलासौ गीतिः प्रविवेश मे श्रवणविवरम्। किमित्येवमतिमधुरं प्रत्यभासत। न खलु सङ्गीतमिदं स्वत एवातीव मनोऽभिरामम्। पान्थः स्वमनीषिकया गायन्नध्वना गच्छति। निशाम्य कौमुदीमयीं निशीथिनीं समुच्छ्वसिति स्म तस्य मानसः सम्मोदसन्दोहः। निसर्गत एव मधुरस्तदीयः कण्ठः, मधुरेण च कण्ठेन मधुमासेऽस्मिन्नान्तरं प्रमोदमधुरिमाणं विकिरन्नसौ व्रजति। कथं तर्हि तन्त्रीपरामर्श इव परिवादिन्या गीतध्वनिरयमालोडयति मे हृदयकन्दरम्।

को ब्रूयात् कथमिति। ज्योत्स्नामयी रजनी, सैकते सरितो विहसति कौमुदी। अर्द्धसंवृताया इव सुन्दर्या नीलनिवसनम्, विशीर्णशरीरा नीलसलिला शैवलिनी पुलिनं परिवेष्ट्य प्रचलिता। राजमार्गे च प्रमोद एव केवलो विराजते, बालकाश्च बालिकाश्च तरुणाश्च तरुण्यश्च प्रौढाश्च स्थविराश्च विमलेषु चन्द्रकिरणेषु संस्नाताः सर्वतो नन्दन्ति। अहमेवैको निरानन्दः, अत एव सङ्गीतेनामुना हृदययन्त्रं मे प्रतिवादितम्।

अहमेककः, अतः खलु सङ्गीतेनामुना कण्टकितं मे कलेबरम्। बहुजनाकीर्णायामस्यां नगर्याममुष्मिंश्च मोदमयेऽनन्ते सलिलस्रोतसि अहम् एककः। किमित्यहमपि, अनन्तेऽमुष्मिन् सलिलस्रोतसि विलीय, एषु च

विशालेषु सम्मोदतरङ्गताडितेषु जलबुद्‌बुदेष्वन्यतमो न भवेयम् । बिन्दुशः सलिलेन समुद्रः सञ्जातः, अहमपि तावत् सलिलबिन्दुः, किमिति समुद्रेऽस्मिन् न विलीये ?

नाहं जाने, केवलमेतावदेवावगच्छामि अहम् एकक इति । न खलु कोऽप्येककस्तिष्ठेत् । अपरः कोऽपि चेत् प्रणयभाजनं ते न सञ्जातस्तर्हि मुधैव मानुष्यकम् । कुसुमं सुरभि, परं यदि घ्राता कोऽपि नास्थास्यत्, तर्हि नैवाभविष्यत् कुसुमं सुरभि—घ्राणेन्द्रियविशिष्टस्याभावे गन्धस्याप्य भावः । न खलु कुसुमं स्वस्य । कृते विकसति । परस्य कृते लम्भय विकासं स्वकीयं हृदयकुसुमम् ।

परं सकृदेव संश्रुतमिदं सङ्गीतं कथमेवं मधुरमापतन्मम मनसि इति नोक्तम् । चिरं खलु नाकर्णितमानन्दोत्थं सङ्गीतम्, चिरं च नानुभूत आनन्दसन्दोहः । यदा किल यौवने पृथिवी सुन्दर्यैवावर्तत, यदा प्रतिपुष्पं सुगन्धमन्वभवम्, प्रतिपत्रमर्मरं मधुरं शब्दमश्रृणवम्, प्रतिनक्षत्रं चित्रारोहिण्योः सुषमां समपश्यम्, प्रतिमनुजमुखं सारल्यं समवालोकयम्, तदा समवर्ततैवानन्दः । सैवेदानीमपि पृथिवी, तदेवेदानीमपि मनुजचरित्रम्, हृदयं पुनरिदमन्यथाभूतम्, तदा तावत् सङ्गीतं श्रृण्वतो मे सम्मोदः समजायत, इदानीं स एव सम्मोदः स्मृतिपथमधिरूढः । यस्यामेवावस्थायां यस्मिन्नेव सुखे तमेवानन्दमन्वभवं सैवावस्था तदेव च सुखं स्मृतिपदवीमुपारूढम् । मुहूर्तकं च पुनरपि तारुण्यं प्रतिलब्धवान् । पुनरपि तथैव मनसा समवेतसुहृन्मण्डलीमध्ये न्यषीदम्, पुनरपि तथैवानिमित्तमुच्चै रहसम्, यच्च वचनम् अनपेक्षितम् इति साम्प्रतं न वदामि, तदानीं तु चित्तचाञ्चल्याद् अवदम्, पुनरपि तानि वचनानि वदितुमुपक्रान्तवान्, पुनरपि निष्कपटेन मनसा परस्य प्रणयं निष्कपटमित्येव समगृह्णाम् । क्षणं मे भ्रान्तिः समजनि, अत एव सङ्गीतमिदं तथा मधुरमापतत् । न केवलमेतावत् । तदात्वे सङ्गीतं मधुरं प्रत्यभासत, अद्यत्वे तु न तथा, यद्या खलु चित्तस्य प्रफुल्लतया तथा प्रत्यभासत, नेदानीं सा वर्तत इति न तथा प्रतिभासते ।

अहं तावन्मनसि मनो निलीय व्यतीतं तद् यौवनसुखम् अनुध्यायन्नासम् तदानीमेव पूर्वस्मृतिसमुद्बोधकं सङ्गीतमिदं प्रविष्टं मे श्रवणपथम्, अत एव तथा मधुरं प्रत्यभात् ।

किमिति सा प्रफुल्लता तत् सुखं नेदानीं वर्तते ? अपि नामोपक्षीणा सुखस्य सामग्री । अर्जनञ्च क्षयश्च—उभे एव सांसारिकी रीतिः । क्षयात् पुनरर्जनमभ्यधिकम् इत्यपि रीतिः । यथा यथातिक्रमिष्यसि जीवितपथं तथा तथा संग्रहीष्यसि सुखदां सामग्रीम् । तर्हि किमिति वयसा साकं कृशतामुपैति प्रहर्षः । किमिति न तथा विभातितरां गगनतारका । किमिति न विराजते सा प्रोज्ज्वलता गगननीलिम्नि । किमिति या किल तृणपल्लवमयी कुसुमवासिता स्वच्छकल्लोलिनी वसन्तपवनविधूता प्रतीयते स्म सैवेदानीं सिकतिलमरुभूरिति प्रतिभाति । केवलं वर्णदः काचो नास्तीति । आशैवासौ वर्णदः काचः । तारुण्ये तावदल्पमेवार्जितं सुखम्, सुखाशा पुनरपरिमिता । साम्प्रतं त्वर्जितसुखमभ्यधिकम्, क्व पुनरसौ ब्रह्माण्ड-व्यापिनी ? नैवावागच्छं तदानीं केन किं सम्पद्यत इति, तेन च सुविपुलमाशंसे । इदानीं पुनरवगतोऽस्मि संसारचक्रमिदम् अधिरूढेन पुनरपि स्वस्थानं प्रत्यावर्तनीयम् इति । यदा च विचिन्तयामि अयमहमग्रतो गच्छामि, तदा केवलमावर्तनमेव विदधामि ।

( क्रमशः )

# श्रीशिवाजिविजयः

[ निबन्धकः—आर. रङ्गाचार्यः ]

साकूता नृपतौ तथाऽतिकुटिलेष्वाविष्कृतानादराः
स्मेराः शैलचरेष्वनन्यशरणे चारे दयामेदुराः ।
वात्सल्यप्रचुरास्तपोधनगणे सत्यां प्रसादोत्तराः
कल्याणं कलयन्तु नः समुदिता मातुः कटाक्षाङ्कुराः ॥

श्रीशिवाजिराजः । अयं माहाराष्ट्रमहीपतिः । असौ विदर्भेषु पुण्यपत्तनादुत्तरतः शिवनगरे (Shivner) १६२७ तमे क्रैस्तवाब्दे जातः । अस्य जननी श्रीमती "जीजा बायी" देवी । अनयाऽसौ वर्धितः, विनीतः, पोषितश्च, आसीच्चासौ तस्यामतीव भक्तिमान् ।

प्रथमे वयसि वर्तमानः शिवाजिराजः साहसिके सांयुगीने कर्मणि प्रसितः । पश्चिमपर्वतश्रेणी (Western ghat) वास्तव्याः पर्वतीयाः "मावालि" समाख्या जनाः अस्य सेनापरिवारा बभूवुः । अमीषां साहाय्येन शिवाजिराजः नगराणि दुर्गाणि च क्रमशो जिगाय । अन्ततोऽसौ सर्वस्यापि दक्षिण (Deccan) देशस्यात्मानम् अधिपतिं मेने ।

औरङ्गजीवः (Aurangazib) अयमुत्तरदेशस्य सम्राड् । शिवाजिराजस्य अव्याहतम् अनुस्यूतम् समरेषु जैत्रमुद्यममालक्ष्य समधिकमन्तर्बिभाय । निसर्गधीरं जयसिंहाभिधं स्वसेनापतिं सहवाससंभाषणादिना शिवाजिराजं वशीकर्तुं दाक्षिणात्ये (Deccan) प्राहिणोत् । जयसिंहः अनुनयेन शिवाजिराजं औरङ्गजीवस्य निदेशानुवर्तने प्रवणहृदयमाततान ।

१६६७-तमे क्रैस्तवाब्दे शिवाजिराजः—औरङ्गजीवस्य सभां प्रविवेश । अपि तु यथार्हं यथाप्रतीक्षं न सभाजितः । व्यमनायत । मध्येसभमात्मानमवगणितं लघूकृतमालक्ष्यामास । प्रतीपमाचचार । अस्यैव हेतोरयं सम्राजा वन्दीकृतः ।

"आग्रा" (Agra) नगराद् बहिरेकं विशालम् अगारम्। तदन्तः कश्चन अपवरकः। तत्र परिकल्पितायामेकस्यां खट्वायां शिवाजिराजः आस्त। निबिडं परिहितां अङ्गरक्षा-(Trousers) मेकां कार्पासमयं कञ्चुकञ्च परिदधानोऽभवत्। उष्णीषं न दधार। असौ च तस्य पुरस्तान्निहितोऽलक्ष्यत।

कुमारः "साम्बजीदेवः" (Sambāgi) अयं शिवाजिराजस्य पुरस्तात्तिष्ठन्नासीत्। अस्य वेषः वासांसि च पैतृकात् प्रकाममभिद्यन्त। नियतं माहम्मदानां रीतिं वेषेणायं सम्यगभिख्यापयतिस्म। आप्रपदीनं मञ्जुलदुकूलरचितं कञ्चुकम्, विविधवर्णशोभितैः पक्षिणां गरुद्विशेषैरलङ्कृतं रम्यमुष्णीषम्, सान्द्रघटिताङ्गरक्षाम्, रत्नखचिते कोशे प्रविष्टं स्पृहणीयं खड्गं च धरन् नियतमसौ मूर्तिमान् वीरो रस इवाबभौ। तस्य अपवरकस्य एकस्मिन्कोणे महान्तः षड् भक्ष्यपिटका निवेशिताः समलक्ष्यन्त।

शि। ( परुषम् ) ननु वत्स, वेषमीदृशं धरन् नियतं त्वं कश्चन माहम्मदो बाल इवाभासि। न किम्? को वेद किमयं स्वीयानि बाह्यान्यङ्गानि गूहते उतं माहम्मदं हृदयमपीति। हा !! कष्टम् !! औरङ्गस्तु सुबहु मयि अनार्यमाचचार। तेष्वयमवद्यतमो गर्हणीयश्च यत्त्वां प्रलोभ्य क्रीतं दासमिवातनोत्। करधृतां पाञ्चालिकामिव (Puppet) त्वामितस्ततो भ्रामयन् विनोदरसमनुभवन्नास्ते। ईदृशमात्मानम् आलक्ष्यापि त्वं न लज्जसे !!!

साम्ब। ( सविषादम् ) हा तात !! नाहमेतस्मै स्पृहयालुः। मदीयानि वासांसि मलिनानि जातानि, तानि वसानोऽहं सम्राजः पुरस्तात् स्थातुं नालम्। एतानि तेन स्वयमेव मह्यमर्पितानि। मदीयानि गृहीतानि। किं तानि निर्णेजकस्य दत्तानि उताहो अग्निसात्कृतानीति नाहं जाने।

शि। नन्वहो! दुरध्वसंचरणदूषितान्यपि स्वीयानि, मन्ये शुद्धिमत्तराणीति, नान्यदीयानि निष्प्रवाणीन्यपि। सज्जनचिराराधितं देवताबिम्बं पुरातनं किञ्चिद्विकलमपि कुशलशिल्पिकरनिर्मितां नव्यामपि पुत्रिकां

सुदूरमतिशेते। यदि नामाकपटं हृदयमच्छिद्रं चारित्र्यं च किं वाससा मलिनेन निर्मलेन वा!

साम्ब। ( मुखं वाससा पिदधाति। विषीदति च )।

शिवा। साधु रे पुत्रक !! साधु !! अपि नाम विषीदसि, विषीद। विषीद । न केवलं मम, अपि तु मया सह 'आग्रां' प्रति ये प्रस्थिताः तेषां समेषामपि प्रस्थानसमयो न शुभंयुरिवासीदिति मन्ये। तथाऽपि मदीया मनोरथा महान्त आसन्। हा! जयसिंह !! 'महती संमानना, बहूनि पारितोषिकाणि, च सम्राजः सभायां भवतः संपत्स्यन्ते।' इति खलु मामाह। अहो !! कियन्ति सुवर्णमयानि, राजतानि, च पारितोषिकाणि मया तेभ्यो व्यतीर्यन्त। किं तैः प्रत्यर्पितं मम !! बत !! अन्तत इदमेकमेव प्राप्तम्, यदहं वन्दीकृतः। मन्ये इदं न्याय्यमिति। यदहं तेषु साधु नाम नाचारिषम्। ततस्तैः कृताः प्रतिज्ञाः, प्रतीपं प्रवृत्ताः। हन्त !! एतावता अनेहसा मया दक्षिणापथस्य (Deccan) अधिपतिना खलु भवितव्यमासीत्। यादृशं मुकुटम्, यादृशं सिंहासनं बीजपूरसम्राजः, तादृशेन खलु मदीयेनापि भवितव्यम्। हा !! अज्ञतायाः प्रकारः !! यदहं तेषां मिथ्याप्रतिज्ञासु प्रत्ययमादधाम्। तैर्यद् यदभिहितं तत्सर्वं सत्यं मन्वानः किलाहम् "आग्राम्" प्रति प्रास्थिषि। बताऽहो !! मदीयो जैत्रः खड्गः तेषां हस्ते निवेशितः। भवतु। तथाऽपि अस्ति निमित्तं किञ्चित् समाश्वासस्य, यत्त्वमेकं तुरूपकोपघ्नं खड्गं धरसि। हन्त !! पवित्रतमे माहाराष्ट्रकुले लब्धजनुषा किं मयाऽप्यसौ द्रष्टव्यः ? हा !! किमिदम् !! कोऽयं विधेर्वामः पन्थाः। त्वामपि वत्सलं तेषां हस्ते पतितं पञ्जरगतं शुकमिव पश्यामि खलु !! हतविधे !! किमियानेव त्वदीयः संभ्रमः !! उत इतोऽप्यधिकोऽस्ति !! ननु सर्वथा प्रभवसि !! कस्त्वां नियन्तुमीष्टे !!

साम्ब। ( सजुगुप्सम् ) तात ! गृह्यतामयं खड्गः। हन्यन्तामनेन ते दुरात्मानः। अथवाऽहम् नियतं निर्दयं हन्तव्यः। यत्त्वां दाक्षिणात्यस्य

(Deccan) जेतारं व्यस्मरम्। अव्याजकृपामम्बां व्यस्मरम्। राष्ट्रं व्यस्मरम्। पौरान्व्यस्मार्षम्। महाराष्ट्रवीरयशःप्रकाशकानि गीतानि व्यस्मरम्। किं मया अपसदेन कृतघ्नेन शुना जीवता, मृतेन वा। हा महाराज !! (इति पादयोः पतति)

शिवा। (पुत्रं सस्नेहं उत्थापयन्, करेणाङ्गानि मुहुः परामृश्य) नहि! नहि! पुत्रक! न त्वं म्रियस्व सञ्जीव शरदश्शतम्। प्रजाः परिपालय। अस्मत्कुलदेवता भगवती अम्बा भवानी ततो जागर्ति। यस्याः प्रसादेन त्वं मातुः पुत्रो जातः। सा नियतं त्वां रक्षिष्यति। भद्रेण गृहं नेष्यति च।

साम्ब। (अप्रत्ययमभिनयन्) किं नो गृहाः? दवीयांसः किल ते। इमां कारामभितो रक्षिणस्संचरन्ति। सायुधा निर्निमेषम् इतस्ततः पश्यन्ति, रक्षन्ति च।

(ततः प्रविशति शिवाजिराजस्य स्यालः हीरदेवः)

हीरदेवः। (कुमारं साम्बदेवं निपुणं निरूप्य) ननु कोऽसौ राज्ञः पुरस्तात्तिष्ठति? को नामायं महापुरुषः? वेषोऽस्य प्रकाममिमं सम्राट्-सभायाः समागतं सूचयति। (साम्बजिं निर्दिश्य) प्रभो! को विशेषः? एतादृशानि शीर्षण्यानि कति कतिविधानि सम्राजः सभायां सुलभानि !!

शिवा। ननु भ्रातः!! मा नामासौ वाक्शल्यैस्तुद्यताम्। यथा वयं तथाऽयमपि अस्मै वेषाय कामं जुगुप्सते। ननु पश्य। कैतवा-ऽनभिज्ञं कथमिमं बालं ते धूर्ता अनर्घैराभरणजालैरवनतशिरस-मतानिषुः। (साम्बदेवस्य कर्णाभरणं करेण परामृशन्) मन्ये इदमेकं पर्याप्तं महान्तं कञ्चन ग्रामं क्रेतुम्। (कनकमयीं शृङ्खलां संस्पृशन्) अनया मासमेकमस्मदीयां सेनां पोषितुं शक्यम्।

हीर। राजन्! तर्हि गृह्यन्ताम् एतानि। अन्यान्यभिनवानि सम्राट् कुमाराय प्रदास्यन्ति। नन्वहो कुमार! न किम्!! भर्तृदारिका नियतं त्वयि बद्धभावा। तस्यास्त्वयि गरीयाननुरागानुबन्धः। एतादृशेन

उज्ज्वलेन वेषेण त्वं कं नाम न मोहयसि। कस्य सचेतसश्चेतो नावर्जयसि। हा !! धिक् !! एते मौगलाः !! (Moguls) आसीत्पुरा कालः कश्चित्, यदा बाबर् (Baber) नाम महायशाः कश्चन योधाग्रणीरासीत्। अहो !! कीदृशी तस्य धीरता !! प्रसन्नोदारता च !! इदानीं तु......( पीटक-समीपं परिक्रम्य ) किमहो !! अद्य न भक्ष्याणि !! न फलानि च। कथमेतत् !! ननु भ्रातः !! अपि तापसान याचकांश्च भोजयित्वा श्रान्तस्त्वमसि ?

शिवा। नो, नो, अद्य नक्तं पिटकानां षट्कं बहिर्यास्यति। ( सस्मितम् ) तेषु पिटकद्वयमतीव भारवद्भविष्यति। तद्वाहकेभ्यो द्विगुणितं वेतनं दातव्यम्। अथवा सुवर्णमेकमेकैकस्मै।

हीरदेवः। प्रातिस्विकं पारितोषिकम् ?

शि। आम्-आम्। प्रातिस्विकमेव। भ्रातः ! अद्य नक्तं वत्सेन सह निष्क्रम्यात्मानम् अपायादस्मात् परित्रातुमिच्छामि। अद्य सायं प्रथमतः पिटकद्वयं तदनन्तरमन्यद् द्वयम्, ततः परमवशिष्टञ्च बहिर्यास्यति।

ही। अहो-किं-तथा !! यदि नाम रक्षिणः प्रविश्य राजानम् अन्तर्हितं पश्यन्ति, किं भवदीयं पिटकद्वयं मध्येमार्गमव्याहतमपगच्छेत्।

शि। (समन्दस्मितम्) यदि नाम कोऽपि मदीयां शय्याम् अधिशेते ?

ही। अस्ति कश्चिदधिशयितुम्।

शि। सन्तु ते बहवो धन्यवादाः। महाराष्ट्रवंशजातानां यत् सदृशं तत्त्वमाचक्षे। यदि नामाहं गृहीतः। भ्रातः ! तदा त्वया तथा द्रष्टव्यं यथाऽयमपराधो वत्सस्य शिरसि न पतेत्। यतोऽयं निसर्गकातरः। कथमपि अमुं परित्रातुमुपायश्चिन्त्यताम्। यद्यपि सम्राजः सभाप्रासादे अस्याव्याजमित्रमेकमास्ते। ननु का सा ? सैव, या सम्राजो दुहिता। साऽस्य परित्राणे कृतमतिर्भवेत्। तथाऽपि त्वयाप्यत्र सावधानेन भवितव्यम्।

हीरदेवः। यावत्कर्तुं शक्यं तावदहमवश्यं कुर्याम्। एवं किल मया प्रवादो बहिस्संचारितः यद्भवाञ्ज्वरातुरः पीड्यस इति। रक्षिणामपि

अहमेवमावेदयम् यन्नायमवसरो युष्माकं हसितुं वोच्चैः शब्दायितुं वेति।

शि। (असहिष्णुतां प्रकाशयन् सवितर्कम्) अहो! किं मां वोढुं कश्चनाश्वोऽपि! पुण्यपत्तनानुयायी मम मार्गो निर्मक्षिकोऽपि!

ही। सर्वं यथोचितं संपत्स्यते। अश्वश्च सज्जः, मार्गश्च निष्प्रत्यूहः। (सहर्षम्) अधुना क्षणमिवाहं शिवाजिराजो भविष्यामि। अयमेव साधीयानवसरो मदीयं यशः प्रख्यापयितुं राजत्वोपज्ञं सन्तोषसुखमनुभवितुञ्च। किं वा लोकः कथयिष्यति। 'कोऽसौ महापुरुषो यः शिवाजिराजस्य शय्यामध्यासिष्टे'ति। ननु पृच्छामि वत्स! पर्वतीयो मूषको निगडादात्मानमुन्मोच्य बहिः पलायिष्टेति यदि नाम तव सम्राड् जानाति किमसौ मदीयं शिरः कदलीलावं लुनीयात्।

सा। (अनाकर्णितम्) किन्न्विदानीमस्माभिः पिटकान्तः प्रवेष्टव्यम्।

ही। आम् आम्। प्रकामं प्रवेष्टव्यम्। न कम्पो न शब्दः। पल्लीवल्लीनेन भूत्वा स्थातव्यम्।

शि। (ससंभ्रमम्) ननु समयः समभ्येति। रक्षिणोऽचिरात् संनिहिता भविष्यन्ति। त्वर्यताम्।

ही। अहं प्रथमतो राजानं पिटकान्तः प्रविष्टं पश्यानि। पश्चादहं कम्बलेन आप्रपदीनं कञ्चुकपिधायं पिधाय शय्यागतो जोषं स्वप्स्यामि। किन्तु राजन्! त्वदीयं चिह्नमेकमपेक्ष्यते। दीयतां मह्यं त्वदीयः कटकः। तमहं प्रकोष्ठे धरन् भवन्तमनुकृत्य द्रष्टृजनान् वञ्चयिष्यामि। यदि यः कोऽपि कम्बलमुत्क्षिप्य मां द्रष्टुमुद्युङ्क्ते तर्हि सर्पोत्थायमुत्थायाहं तं तीव्रं दशेयम्।

शि। सन्तु धन्यवादाः। यद्यहं गृहीतः स्मर्यतां यदुचितं तदाधातुम्। वत्स! अयं ते समयः। गाहस्व पिटकाभ्यन्तरम्। पुष्पैः पल्लवैश्च पिटकस्य मुखं सम्यक् पिहितमारचय।

सा। (पिटकान्तः प्रविश्य) अहो गाढं तमः!!

ही। तर्हि स्वस्थः सुखं स्वपिहि। पुण्यनगरमासाद्य प्रबुध्यस्व। ततश्चिन्तय परम् अहो ! कियद्दूरमागतं मयेति।

शि। ( पिटकान्तः प्रविशति, पुष्पैरभिनवैः पल्लवैश्च पिटकस्य मुखं सम्यगावृणोति। )

( ततः प्रविशतो भृतकैरनुगम्यमानौ द्वौ रक्षिणौ )

प्र-रक्षी। ( भृतकान्निर्दिश्य ) नन्वरे ! अत्र षट् पिटकाः सन्ति। तान् बहिर्नयत। मा शब्दः कारि। तत्र कश्चन ज्वरातुरः पुरुषः शेते।

द्वि-र। तर्हि भ्रातः ! तेनेतः पूर्वं कृतानि दानानि वृथा खलु भविष्यन्ति। यतो नायमनुभविष्यति जीवन् तज्जन्यं यशः।

प्र-र। किमहो ! सर्वैरस्माभिरपि मर्तव्यं किल। भृतकाः ! त्वर्यताम् त्वर्यताम्।

मुख्यो भृतकः। भाव ! अमी पिटका अद्यातितरां भारवन्त इव भान्ति, पूर्वेद्युर्न तथा।

द्वि-र। मुमूर्षुः पुरुषोऽतीवोदारः किल।

( भृतकाः पिटकान् कथमपि वहन्तस्त्वरितं परिक्रामन्ति )

प्र-र। ( शयानं पुरुषं पश्यन् ) किमद्याप्ययं स्वपिति। सर्वथा मृत-प्राय इवाभाति। ( शनैः शनैर्निष्क्रामन् ) पश्यरेऽस्य भुजम्।

द्वि-र। पश्यरेऽस्य कटकम्। अहो ! शिवाजिराजस्य कटकम्। मन्ये नियतमयं सुवर्णमय इति। कथमयं प्रकोष्ठाद्भ्रंशते ! अस्माकं पुनरप्यत्रागमनात् पूर्वमेव यद्ययं परासुर्भवति.........? ( तदीयमुज्ज्वलं कटकं पुनः पुनर्निरूपयन् ) रे, रे, त्वरितमागच्छ रे। यः परासोर्जनस्य स्वम् अपहरति स लोकैर्गर्ह्यते, नरकं नीयते च। पारितोषिकं तु वयं सम्राजः समधिकं प्राप्स्यामः, यदा असौ दिवं गत इति वार्ता तस्य कर्ण-जाहं विगाहेत्।

( रक्षिणौ निष्क्रान्तौ )

ही। (झटिति शय्योत्थायं समुत्थाय आत्मीयानि कञ्चुकशिरोवेष्टन-

वासांसि यथापुरं परिदधाति। सेनापतिवेषं पुरस्कुर्वन् श्मश्रुकूर्चादिकं परामृश्य समीकुर्वन् स्वयमन्तर्हसति। प्रकाशम् साश्चर्यम्) अहो! न कोऽपि मृतः। किमेते रक्षिणो भृतकाश्च समधिकमुत्कोचदानेन यथोचितं संमानिताः। भवतु यथा तथा वा। राजा वत्सेन सह निष्प्रत्यूहं भद्रं बहिर्निष्क्रान्तः। (इतस्ततः परिक्रामन् रक्षिणो निर्दिश्य) 'ननु रे! तूष्णीम्! शिवराजः सुखं स्वपिति। मा शब्दः कारि' इति।

(निष्क्रान्ताः सर्वे)

इति प्रथमोऽङ्कः

---

## द्वितीयोऽङ्कः

[ततः प्रविशति आसनस्था मन्त्रिणा (Chronicle) सचिवेन (Superintendent of letters) पण्डितरायेणान्यैश्च अन्वास्यमाना शिवाजिराजस्य जननी-देवी जी-जी-भायी]

देवी-जी-जी-भायी। अहो! शिवाजिराजो मृत इति मिथ्या। न मे कस्यापि वचसि विश्वासः। शिवाजिमन्तरेण काममुत्कण्ठते मदीयं चेतः। अहं तं धात्रीवत्, पितृवद् उपालालयम्। नाहं तस्य शरीरे किमपि मृतिसूचकं सामुद्रिकं लक्षणं समलक्षयम्। अयं लेखगतो विषयो नियतमयथार्थः।

रासदासः। देवि! सचिवो मन्यते 'लेखो यथार्थं ब्रूते' इति, यतोऽसौ 'आग्रा'नगरात्प्राप्तः।

देवी। तस्यैव हेतोरहं ब्रवीमि, अयमसत्यं ब्रूत इति। यदि नामानृतं कार्यसाधकम्, किमौरङ्गजीवः सत्यं लक्षीकुर्यात्। असौ मिथ्या प्रतिज्ञावचनैः कपटं प्रलोभ्य किल राजानं मम वत्स'माग्रा'नगरमनैषीत्।

रामदासः। देवि! प्रसीद। न तथा। जयसिंहः किल प्रतिज्ञा-

वचनान्यभिदधौ। विनैव प्रयोजनं सम्राड् न कस्मैचिदपि पारितोषिकं प्रयच्छति।

मन्त्री। ननु कार्याणि गूढानि दृश्यन्ते। इतः परं वार्ता किं शुभंयुः समाकर्ण्येत। बीजपुरे जनताया महान् क्षोभ इति श्रूयते। स च महति कलहे परिणंस्यत इति लोकप्रवादोऽस्ति अत औरङ्गजीवो विष्वग्जालकानि प्रक्षिप्तवान्। अहो! अस्मदीयः शिवाजिस्तु अद्यापि विदेशेषु पर्यटन्नस्ति। किं कुर्मः। स कुत्र वसतीति न ज्ञायते। न आग्रापुरे। नाप्यत्र। तर्हि कुत्र गतः स्यात्।

सचिवः। ( सविषादम् ) देवि! प्रसीद! पुनः पुनः पठ्यमानोऽयं लेखस्तमेवार्थं स्थिरीकरोति। अपि तु कथं मृतः कुत्र मृत इति स्पष्टं नाभिधत्ते।

( शिवाजिराजस्य महिषी सोयादेवी अपटीक्षेपेण प्रविश्य )

सो-दे। ( सानुशयम् ) अहो! भावुकाः! प्रसीदन्तु भवन्तः, ब्रूत मे सत्यम्। किमयं लेखो वत्सं साम्बजिमधिकृत्य किञ्चित् सूचयति।

जी-दे—( परुषम् ) वत्से! क ते शान्तिः। समाश्वसिहि। किं लोके त्वमेकैव जननी या पुत्रं प्रसूतवती।

सो-दे। प्रसीदन्तु महादेव्यः। वत्सं साम्बजिमनालोक्य न मे मनसः शान्तिः। हा! वत्स कुमारक! देहि मे प्रतिवचनम्। हा! जगदेकचन्द्र! कुतश्चिरयसि। चन्द्रानन! एह्येहि! देहि मे परिष्वङ्गसुखम्। चन्द्राभिरामगुण! त्वया विना प्रदहमिति विप्रलब्धास्मि दग्धवेधसा! अम्बेत्यालपतस्ते वदनमवलोकयितुमुत्कण्ठते मदीयं हृदयम्। आयाहि! रे! सकृद्दर्शय ते मुखपद्मम् (अकुण्ठोत्कण्ठया गृहीतकण्ठा अश्रूणि प्रमार्ष्टि )।

जी-दे—( शोकावेगमवष्टभ्य ) वत्से! मा विषीद! सत्यं ब्रवीमि। शिवाजिराजो वत्सेन साम्बजिना साकं नियतं प्रत्यागमिष्यति। सुधामयैर्वचनैरस्मानानन्दयिष्यति। अपि तु कदा कथमिति न जाने। पुत्र-

विरहजं दुःखमनुभवन्त्यपि राजानं शिवाजिं वत्सं कुमारं साम्बजि चोपोषिताभ्यामिव लोचनाभ्यां पातुमहं जीवितास्मि। ( मन्त्रिणं दृष्ट्वा ) नन्वार्य ! किमेतत्। पौरजनाः समुपजातोद्वेगा इव लक्ष्यन्ते। तेभ्यो वेतनानि अधिकानि दीयन्ताम्। कुलवधूभ्योऽभ्यर्हितानि दानानि अर्भकेभ्यः स्वादूनि भक्ष्याणि रम्याणि क्रीडनकानि च समुदारं वितीर्यन्ताम्। अत्र यो व्ययो भवति स मदीयेन धनेनास्ताम्। दानानि च महाराजनाम्ना भवन्तु।

मन्त्री। सत्यमाह देवी। यदि योधाः पृच्छन्ति महाराजः कुत्रास्त इति, किं मया प्रतिपत्तव्यम्।

जी-दे। किं प्रतिपत्तव्यम्! महाराजः शिवाजिः सम्प्रति काशीमधिवसति। धार्मिकान् क्रमानाचरन्नस्तीति। लोकानामिदं विदितं क्रियताम् यत् शिवाजिराजस्य जातकं परीक्षितम्। ततो ज्ञायते, यदसावचिरात् सर्वस्यापि महाराष्ट्रमण्डलस्य मूर्धाभिषिक्तो महाराजो भविष्यतीति स्फुटं प्रतीयत इति। ये कार्यार्थिनः, ये धनार्थिनः, अन्ये च ये अस्मद्राजगृहस्य द्वारमध्यासते, ते सर्वेऽप्यविलम्बितं स्वैरमन्तः प्रवेश्यन्ताम्। सर्वेऽपि मनोहृत्य भोज्यन्ताम्। न कस्यापि प्रवेशः प्रत्याख्यायताम्। योधास्तापसा जानपदाश्च सुहिताः क्रियन्ताम्। न कस्यापि पुरस्तात् 'ने'ति शब्दः प्रयुज्यताम्।

मन्त्री। यथा देवी समादिशति।

जी-दे—( आत्मगतम् ) कथमपि आत्माऽवष्टब्धोऽपि न समाश्वसिति। उत्ताम्यति मे हृदयं पुत्रदर्शनाय। हा वत्स! क्व ते गुणाः! क्व स्नेहः! क्व धर्मज्ञता! क्व बन्धुप्रीतिः! क्व वा सा परिजनवत्सलता! लिखितोऽपि नालिखः। अनागमनकारणं न किञ्चित्प्रतिलिखितवान्। स्मरन्त्याः कामं दीर्यत इव मे हृदयम्। विध्यन्तीव मर्माणि। निर्यान्तीव प्राणाः। दूयते मेऽन्तरात्मा, अतिस्नेहः पापशङ्की। हा! भद्रमुखाः आर्याः! दत्त मे प्रतिवचनम्। शिवाजिमन्तरेण माश्लीलं संभाषध्वम्।

( क्रमशः )

---

# व्यासाभिप्रायानुसारिब्रह्मसूत्रभाष्यनिर्णयः

[ निबन्धकः—श्रीराजेन्द्रनाथ-घोष-विद्याभूषणः ]

भगवद्बादरायणव्यासप्रणीतब्रह्मसूत्राण्याश्रित्य इदानीम् उपलभ्यमानानां भाष्याणां मध्ये शाङ्करभाष्यमेव प्राचीनतमम्। इतः प्राचीनतरं भाष्यम् इदानीं नोपलभ्यते। तत्र प्राचीनविषये प्राचीना एव प्रमाणमिति प्रायेण मन्यते। अतो ब्रह्मसूत्रस्य व्यासाभिप्रायानुसारि भाष्यं निर्णेतुम् आदौ शङ्करभाष्यम् अवलम्ब्य ब्रह्मसूत्रस्य किञ्चित् परिचयप्रदानं समुचितमेव। तथाहि शङ्करभाष्यानुसारेण एतद्ब्रह्मसूत्रग्रन्थस्य ५५५ सूत्राणि वर्त्तन्ते। एतैः सूत्रैः तन्मतेन १९१ संख्यकानि अधिकरणानि भाष्यटीकाकृद्भिः ग्रन्थेऽस्मिन सन्निवेशितानि। अधिकरणं च विचारविशेषः। एतद्द्वारा तत्त्वोपदेशकथनं मीमांसादर्शनस्यैव वैशिष्ट्यम्।

तत्र अधिकरणं षडङ्गम्, यथोक्तं भाट्टदीपिकायां तट्टीका-भाट्टचिन्तामणौ च—

"अधिकरणं तु वेदवत् षडङ्गम्, यदाहुः—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
प्रयोजनं सङ्गतिश्च प्राञ्चोऽधिकरणं विदुः॥

पञ्चाङ्गमिति प्रामादिकः पाठ इति।" (५म-पृष्ठे द्रष्टव्यम्)

तद् यथा—अस्य ग्रन्थस्य प्रथमं यद् अधिकरणं तत् जिज्ञासाधिकरणं नाम। तत्र सङ्गतिस्तावत् प्रथमा श्रुतिमीमांसारूपा श्रुतिसङ्गतिः। द्वितीया श्रौतब्रह्मणो विचाररूपा शास्त्रसङ्गतिः। तृतीया तादृशे ब्रह्मणि श्रुतिवाक्यानां समन्वयरूपा अध्यायसङ्गतिः। चतुर्थी स्पष्टब्रह्मलिङ्गकश्रुतिवाक्यानां समन्वयरूपा पादसङ्गतिः। अस्य प्रथमाधिकरणत्वाद् अधिकरणसङ्गतिर्नाम षष्ठी सङ्गतिर्नास्ति।

अस्य विषयस्तावत्—वेदान्तवाक्यविचारः, अथवा तन्मूलं "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इत्यादिश्रुतिवाक्यजातम्।

संशयस्तु—ब्रह्म विचार्यं न वा इति ।

पूर्वपक्षस्तु—ब्रह्म न विचार्यम्, तत्र हेतवोऽपि ।

सिद्धान्तपक्षस्तु पुनः—ब्रह्म विचार्यमेव, तत्र हेतवोऽपि ।

प्रयोजनं फलं वा अस्य—पूर्वपक्षे, एतच्छास्त्रं न आरम्भणीयम्, सिद्धान्तपक्षे तु शास्त्रमेतद् आरम्भणीयमेव ।

एतादृशो यः षडङ्गसम्बलितो विचारः, स एव अधिकरणम् इति आख्यायते। एतादृशानि अधिकरणानि, अस्मिन् ग्रन्थे शङ्करभाष्यानुसारेण १९१-संख्यकानि भवन्ति। इदानीं विचार्यम्—एतानि अधिकरणानि ५५५ सूत्रैः कया रीत्या रचितानि इति । एतदर्थं च अस्माभिः आदौ ग्रन्थप्रकृतिरेव आलोचनीया ।

अस्य ग्रन्थस्य अधिकरणं क्वचिद् एकेन सूत्रेण, क्वचिद् एकाधिकसूत्रेण रचितं दृश्यते। तस्य च अधिकरणस्य पूर्वपक्षोऽपि क्वचिद् एकेन सूत्रेण, क्वचिद् एकाधिकसूत्रेण रचितः, सिद्धान्तपक्षोऽपि तथैव। कुत्रचिद् अधिकरणे सिद्धान्तपक्षमात्रं विद्यते, पूर्वपक्षस्तत्र ऊहनीयः, क्वचिन् एकस्मिन सूत्रे एव पक्षद्वयमपि दृश्यते। तत्र एकाधिकसूत्रेणैव अधिकरणं रचितम्। परन्तु कुत्रापि अधिकरणं न केवलं पूर्वपक्षमात्रावसानम्। एवं च अस्य ब्रह्मसूत्रग्रन्थस्य भाष्यकृतां मध्ये सूत्रव्याख्यायां बहुषु मतभेदेषु सत्स्वपि अस्य इयं रचनाशैली सर्वसम्मता एव तत्र न कोऽपि परस्परं विवदते। तथाच अस्यग्रन्थस्य ५५५ सूत्रैः १९१ अधिकरणैर्वा चत्वारोऽध्यायाः, प्रत्यध्यायं चत्वारः पादा वर्तन्ते, तेन ग्रन्थोऽयं षोडशपादात्मको भवति। अस्य अध्यायपादसंख्यायाम् अध्यायपादविभागे वा भाष्यकृतां मध्ये कोऽपि मतभेदो न दृश्यते, तथापि सूत्रसंख्यायां सूत्रपाठे, सूत्रार्थे, अधिकरणविभागे, पूर्वोत्तरपक्षीयसूत्रनिर्देशे च तेषां मध्ये महान मतभेदो वर्तते ।

श्रीमच्छङ्कराचार्यपरभाविनाम् एतेषां भाष्यकृतां मध्ये एतादृशमतभेददर्शनेन आशङ्केयं मनसि जायते, किं शङ्करसूत्रव्याख्यानं सूत्रकृद्भगवद्

व्यासाभिप्रायमनुसरति न वा ? यतः श्रीमच्छङ्करमतविरोधिभाष्येषु तत्तद्-भाष्यकर्तारः सर्वे एव स्वस्वभाष्यं भगवद्व्याससम्मतं भाष्यमिति वर्णयन्ति । अतः शङ्करसूत्रव्याख्यानं सर्वेभ्य उपलभ्यमानभाष्येभ्यः प्राचीनतममपि व्याससम्मतं न वा, अथवा सर्वेषां भाष्याणां मध्ये कतमं कियद् वा व्याससम्मतम् इति निर्णेतुं प्रयासोऽत्र क्रियते । यतो यद् भाष्यं सूत्रकृद्-भिमतं तदेव प्रमाणं भवितुम् उचितं सूत्रार्थनिर्णये । ततश्च वेदान्तार्थ-निर्णये ब्रह्मज्ञानाय च तन्मतमेव अनुसरणीयं मोक्षकामैः । यथोक्तं मुण्डकोपनिषदि—

वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद् यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ (३।२।६)

अत्र वेदान्तार्थविज्ञानं मोक्षहेतुरिति अवगम्यते ।

किन्तु सर्वैर्भाष्यकृद्भिः स्वस्वमतानुकूलसूत्रव्याख्यानकाले एतादृशं दुश्छेदं युक्तिजालं विस्तारितं यद् दृष्ट्वा व्यासाभिमतनिर्णयः सुतराम् असम्भव इति प्रतिभाति सर्वेषाम् । अत एतत् कल्प्यते—अयं मतभेदश्चेद् निरा-करणीयस्तदा व्यासशिष्यपरम्पराक्रमेण या व्याख्या अनवच्छेदेन आयाता, तदनुसरणं विना उपायान्तरं नास्ति इति । यतो भगवता व्यासेन अस्मिन् सूत्रग्रन्थमध्ये एतदर्थं किमपि इङ्गितं कृतमिति न दृश्यते । नवैतदर्थं किञ्चि-दपि सूत्रादिकं रचितम् एतदपि नैवोपलभ्यते । अयं व्याससम्प्रदाय इति सर्ववादिसम्मतो न कोऽपि सम्प्रदायश्च दृश्यते लोके । अतो ब्रह्मसूत्राणां व्यासाभिमतव्याख्यानिर्णयः कथमपि न सम्भवतीति प्रतिभाति ।

तथापि विशेषसाधारणतया सत्यानुसन्धित्सया च सूत्राणाम् आलो-चने कृते एवमेव प्रतीयते, यत् सूत्रकारैरेतदर्थं न किमपीङ्गितं कृतम् इति न समीचीनम् । यतः सूत्रकृतो भगवतः स्वकृतसूत्राणां व्याख्या नानाजनैर्नानाविधा करिष्यत इत्येतद् न कदाप्यभीष्टं भवितुम् अर्हति । मद्वचनं न कोऽपि बोद्धुं शक्नुयात् एतादृशी इच्छा नैकस्यापि ग्रन्थकारस्य भवेत् । न कोऽपि इच्छेत् मद्वचनमाश्रित्य सर्वे विवदन्ताम्

इति। अतो व्यासूत्राणां नानाव्याख्याननिवारणाय ग्रन्थकृद्भिर्भगवद्व्यासदेवैः सूत्रमध्ये अकृतमपि स्पष्टम् इङ्गितं न तत्र सर्वथा विद्यत इति कल्पनं न सङ्गतम्। एवमपि स्यात् यत् सूत्राणाम् अर्थः शिष्यवर्गैर्गुरुमुखाद् अधिगम्यताम् इति उद्दिश्य सूत्रकृता भगवता तादृशम् इङ्गितम् स्पष्टतया न कृतम्। यतो गुरुमुखाद् अनागता विद्या न सफला भवति, इति प्रसिद्धं लोके। यथाहुः—"सम्प्रदायविहीना ये मन्त्रास्ते विफला मताः" इति। विषयेऽस्मिन् प्रायेण विसंवादो नास्ति, अतो मन्यते एतस्मादेव कारणात् सूत्रकृता ग्रन्थनाम, ग्रन्थकर्तृनाम, अध्यायपादाधिकरणनामादिकं च न ग्रन्थमध्ये सन्निवेशितम्। तथैव पूर्वोत्तरपक्षनिर्णायकपरिभाषासूत्रादिक्रमपि न कृतम्, एतत् सर्वं गुरुवक्त्रेभ्यः शिष्यसम्प्रदायैरधिगम्यताम् इत्येव तस्याशय आसीत्।

तथापि सर्वासां चिन्तानां कश्चित् साधारणो नियमो वर्तत एव। तेन सूत्ररचनाया अपि केनचित् साधारणेन नियमेन भवितव्यमेव। ततस्तन्नियमानुवर्तिभिरपरैरपि यत्ने कृते प्रागुक्तविषयादिनिर्देशः कर्तुं शक्यते। ये खलु "शङ्करसम्प्रदाय एव व्याससम्प्रदायः" इति मन्यन्ते, तेषां शाङ्करभाष्यमेव व्यासमतानुसारि भाष्यम् इति अवधारयितुं न कापि बाधा भवेत्। ये तु अत्र विप्रतिपन्ना भवेयुस्तेषां कृते स्वातन्त्र्येणास्य निर्णयचेष्टा न अनावश्यकी।

नूनमेतत् कार्यमतीव दुरवगाहम्। इयद् दुरवगाहं यत् स्वयं सूत्रकृतं भगवन्तं विना यः कोऽप्येतत् कार्यं करिष्यति तेनैव भ्रमितव्यम्। यत एकस्य चिन्तनं नान्यैः सम्यक् ज्ञातुं शक्यते, सर्वान्तर्यामिनं विना। न ज्ञायते किम् एतस्मादेव कारणात् महामहापण्डितसिद्धमहापुरुषसंकाशैराचार्यवृन्दैरेतद्ब्रह्मसूत्रग्रन्थभाष्यरचनायां कृतायामपि व्यासाभिमतसूत्रार्थनिर्णयाय पृथग् विशेषेण वा कश्चित् प्रयासो न कृतः। अयमेव व्यासाभिमतसूत्रार्थः, इतोऽन्यो न कश्चित् सम्भवेत् इत्येवंप्रकारकं किमपि लेखनीसञ्चालनं तैर्न कृतम्।

विभिन्नभाष्याणां दर्शनेन सर्वेषां मनसि ईदृशी चिन्ता स्वाभाविकी यतः शाङ्करभाष्ये दृश्यते भाष्यकृद्भगवता शङ्कराचार्येण ततोऽपि सुप्राचीन-वृत्तिकारस्य व्याख्यानं बहुषु स्थलेषु खण्डितम्, तदर्थं युक्तिरपि प्रदर्शिता, तत्रानन्दमयाधिरणम् एकं स्थलम्। परन्तु वृत्तिकारात् प्राचीनं व्याख्यानमवलम्ब्य नैतत् कृतम्। तथैव शङ्करभगवतः प्राक्तनानां बोधायनोपवर्षादीनां मतमनुवर्तमानैर्भास्कररामानुजादिभिः शङ्कराचार्यपर-भविकैः सह यत्राधिकरणपूर्वोत्तरपक्षविभागेषु सूत्रार्थनिर्णये च शङ्करभगवतो मतभेदो दृश्यते, तत्र बोधायनादिभिः सह शङ्करभगवतो मतभेदः सञ्जात इति कल्पयितुं शक्यते। तथा सति तत्र बोधायनादीनां वाक्यमवलम्ब्य अनभीष्टमतनिरसनं शङ्करभगवता कर्तुम् उचितमासीत् परन्तु भाष्यकृता शङ्कराचार्येण तन्न कृतम्। एवं वृत्तिकृन्मतखण्डनस्थले ततोऽपि प्राचीन-भाष्यादिकं प्रमाणतया प्रदर्शनीयमेवासीत्। तात्त्विकमतभेदनिरसनाय केवलम् एकस्मिन् स्थले वृत्तिकृतोऽपि प्राचीनतर-स्वसम्प्रदायप्रवर्तकशुक-शिष्यगौडपादाचार्याणां मतं तत्प्रणीतकारिकामुद्धृत्य प्रमाणत्वेन उपन्यस्तं शङ्करभगवता। परन्तु बहुषु स्थलेषु नैतत् कृतम्। अन्यत्र पुनः शङ्कराचार्येण भगवदुपवर्षाचार्यस्य वाक्यमुद्धृत्यैव विरुद्धं मतं निरस्तम्, एतस्य को हेतुर्नैव बोद्धुं शक्यते। किं ब्रह्मसूत्रस्य प्राचीनवृत्तिभाष्याणां तदा विलोपः सञ्जातः। अतः शङ्करभगवतस्तेषामुपलम्भो नाभवत्। अथवा भास्कररामानुजादीनां व्याख्यानं प्राचीनवृत्तिभाष्यानुगमेव न भवति, अतः प्राचीनभाष्यादिभिः सहाविरोधाद् रामानुजादिभिः सह विरोधे-ऽपि शङ्करभाष्ये बहुषु सूत्रव्याख्यादिस्थलेषु भास्करादीनां मतबीज-खण्डनार्थं भास्कररामानुजाद्युपजीव्यबोधायनोपवर्षादीनां वाक्यानि प्रमाण-त्वेन न प्रदर्शितानि, असम्भावितत्वाद् इति निर्णेतुं न शक्यते। यथैव शङ्करभगवता वृत्तिकारमतखण्डनाय प्राचीनतरवृत्तिभाष्यकृतां वाक्यादिकं प्रमाणत्वेन न प्रदर्शितम्, तथैव शङ्करपरभविकभाष्यकृतोऽपि भास्कर-रामानुजादयः अधिकरणविभागादिविषये सूत्रार्थनिर्णये च शङ्कराचार्येण

सह यत्र भिन्नमतावलम्बिनोऽभवन् तत्र शङ्करव्याख्यादिखण्डनाय शङ्करपूर्ववर्तिभाष्यादि न प्रदर्शितम्। भास्कराचार्यो रामानुजाचार्यश्च शङ्कराविर्भावानन्तरं शङ्करभाष्यप्रतिवादम् अतिभीषणतया कृतवन्तौ, तथापि उक्ताधिकरणविभागादिषु तौ आचार्यवर्यौ शङ्करं नानुसरन्तौ अपि शङ्करपूर्ववर्तिभाष्यादिप्रमाणेन शङ्करव्याख्यानं न खण्डितवन्तौ। स्वीयाधिकरणविभागादीन् एव सर्ववादिसम्मतान् इव कृत्वा तौ स्वमतेन विवृतवन्तौ एव। नैतत्समीचीनम्। रामानुजाचार्येण वृत्तिकारवाक्यं सकृदेव द्विर्वा उद्धृतम्; तदपि साक्षाद् वृत्तिकारवाक्यं न वा इति सन्दिह्यते। यामुनाचार्यादिभिर्वृत्तिकारवाक्यत्वेन यद् वर्णितम् तदेव नूनं रामानुजाचार्येण उद्धृतम्। भास्कराचार्येण तु तदपि न कृतम्। तेन तु एकमपि उपवर्षवाक्यं नोद्धृतम्। अतस्ताभ्यां वृत्तिग्रन्थो न दृष्ट इति प्रतीयते। शङ्करभगवता तु वृत्तिग्रन्थो दृष्ट एवेति सम्भाव्यते। यतस्तेन भाष्यमध्ये मतभेदस्थले आदितोऽन्तपर्यन्तं सर्वत्र वृत्तिकारमतं निरस्तम्। तेन यत्र वृत्तिकारमतं न खण्डितं भगवता तत्र वृत्तिकारेण तस्य ऐकमत्यमेव आसीद् इत्येव अनुमीयते। वृत्तिग्रन्थम् अदृष्ट्वा भाष्यमध्ये आन्तं तन्मतखण्डनं न सम्भवति। भास्करादयो यथा शङ्करभाष्यत एव वृत्तिकारमतं विदितवन्त इति वक्तुं शक्यते, न तथा शङ्करभगवान् वृत्तिग्रन्थादन्यतः कुतश्चिद् भाष्यान्तरतो वृत्तिकारमतं ज्ञातवान्, इति ज्ञायते। अतः शङ्करभगवता वृत्तिग्रन्थो दृष्टः न तु भास्करादिभिः। तेन भास्करादीनां मतं वृत्त्यनुसारीति न कल्पयितुं शक्यते। एवं वृत्तिकारमतमेव व्याससम्मतम् इत्यपि वक्तुं न केनापि शक्यते प्रमाणाभावात्। अतः कतमत् सूत्रव्याख्यानं व्यासमतानुसारीति निर्णयः सुदूरपराहत एवेति प्रतिभाति।

व्यासमतवर्णनम् नितरामेव दुष्करं विवादास्पदीभूतविषयश्च। सूत्रकृतां साक्षादुपदेशं विना कृतः सूत्रार्थो न व्याससम्मतत्वेन सर्वैः स्वीकरणीय इति भास्करादिभिः सर्वैर्नूनमेव अवधारितम्। व्यासाभिप्रायानवधारणे मुख्यं कारणमेतच्च वर्तते। यद् ग्रन्थकर्तुर्ग्रन्थमध्ये विषयसन्निवेशो न

केवलं युक्तिम् अनुसरति किन्तु ग्रन्थकर्तुरिच्छामपि। अतो भगवतो व्यासादन्यैर्व्यासमतनिर्णयोऽतीव दुष्करो भवति। अत एव एतदेव व्यासमतं नान्यद् इति न केनापि भाष्यकारेण अवधारितम् उक्तं वा। वस्तुतस्तु सर्वज्ञाद् ईश्वराद् अन्यः कोऽपि सम्पूर्णतया सर्वज्ञो भवितुम् नार्हति। तेनान्योऽपरस्य हृद्गताशयम् आविष्कर्तुं न सर्वथा समर्थो भवेत्। अतः सिद्धमहापुरुषाणाम् अवतारकल्पानाम् आचार्याणामपि व्यासमतनिर्णयोऽतीव दुःसाध इत्यत्र सन्देहावसरो नास्ति। का कथा स्वमतप्रख्यापनार्थिनाम् अर्वाचीनानां भाष्यकर्तॄणाम् इति प्राचीनभाष्यकर्तारोऽपि विदितवन्तः।

तथापि ब्रह्मसूत्रस्य सूत्रकाराभिमतार्थनिर्णये नैराश्यं न समुचितम्। यतो ग्रन्थरचनायां ग्रन्थकर्तुरिच्छानुसारी यावान् युक्तिभागो ग्रन्थमध्ये लब्धावसरः, तावन्मात्रम् अवलम्ब्य अस्माभिरपि व्याससूत्रस्य व्यासाभिमतार्थो निर्णेतुं शक्यते। युक्तिः खलु सर्वेषां सम्पत्तिः, तत्र सर्वेषां समानोऽधिकारो वर्तते। अतो युक्तिसहायैरस्माभिर्व्याससूत्रस्य युक्तिमूलता आविष्कर्तुं शक्यते। उपक्रमोपसंहारादिषड्विध-तात्पर्यनिर्णायक-लिङ्गैः सर्वेषां ग्रन्थानां तात्पर्यनिर्णयः सम्भवति। अत एतेनैव उपायेन व्याससूत्रस्य तात्पर्यनिर्णयप्रयासो न व्यर्थो भवेत् कथंचन। एवं रीत्या सूत्रार्थनिर्णये कृते व्यासेच्छामूलकसूत्रार्थमध्ये संशयविपर्ययादीनां सम्भावना स्वल्पा एव अवशिष्येत। अतो व्यासाभिमताधिकरणविभागादिविषये सूत्राणां पूर्वोत्तरपक्षविभागविषये तथा सूत्रार्थनिर्णये च अस्माकं सर्वथा नैराश्यं न शोभते।

नूनं मादृशस्वल्पबुद्धीनाम् एतादृशं कर्म नितराम् अशोभनम् किम् अधिकम् असङ्गतमेव। तथापि एतदर्थं योऽयं मे प्रयत्नस्तस्यायमेवाशयो यद् यदि मदीयां व्यर्थचेष्टां दृष्ट्वा कोऽपि महात्मा विषयेऽस्मिन् प्रवर्तेत असन्तोषवशाद् अनुकम्पावशाद् वा, तदैवाहं सफलकामो भवेयम्। यतस्तदा कदाचिद् व्यासाभिमतसूत्रार्थनिर्णयः पूर्णतां प्राप्नुयात्

---

# शब्दार्थवैचित्र्यम्

[ निबन्धकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः शास्त्री, एम. ए. ]

( ३ )

संस्कृतभाषायां मृगशब्द आदौ वन्यपशुमात्रपर आसीत्, "मृगो न भीमः कुचरो गिरिष्ठाः" इत्यादिः श्रुतिरत्र साक्ष्यमावहति। क्रमेण च कुरङ्गस्यैव बोधकोऽयं संवृत्तः। अत एवोक्तमाभिधानिकैः "मृगः पशौ कुरङ्गे च" इति।

अत्र चार्थपरिवृत्तौ बीजमिदानीं प्रदर्श्यते—वन्यपशुवाचकस्य मृगशब्दस्य समुच्चारणतो वक्तृश्रोत्रोः सविशेषं परिचितः प्रकरणानुरोधी च प्राणिविशेषः प्रतीतिपथम् अवतरेत्। एवञ्च भोजनाद्यर्थं मृगमांसस्यैव सुलभतया मृगयाद्यर्थम् अपि तस्यैव प्राणिनो वाहुल्येनोपलम्भाद् मृगशब्दसमुच्चारणेन विशेषत एव भक्षणीयस्य सविशेषञ्च मृगयाविषयस्य प्राणिनश्चित्रम् उदयमासादयति मानसे। प्रथमतश्च कुरङ्गलक्षणस्य प्राणिविशेषस्य बोधनार्थं मृगब्दस्य प्रयोगोऽवाचकतया प्रतिभासेत, परमवाचकोऽप्ययं शब्दः पुनः पुनः प्रयुज्यमान आस्याद् आस्यञ्च सञ्चरन् क्रमेण रूढत्वमधिगच्छेत्। एवमेव वन्यजन्तुवाचिनो मृगशब्दस्य कुरङ्गवाचित्वं सञ्जातम्।

आङ्गलभाषायां deer शब्दस्यापि गतिरीदृश्येव। प्राचीनाङ्गलभाषायां धूलि (dust)- धूम (fumus)- प्रभृतिषूपलभ्यमानाद् धूधातोर्निष्पन्नतया 'dheuz-शब्दो जीवन्तं श्वसन्तं च प्राणिनमवबोधयति स्म। अत एव कविकुलचूडामणिना शेक्सपीयरेण प्रयुक्तम्—"*mice and rats and such small deer*". क्रमेण च प्रोक्तपूर्वकारणवशात् कुरङ्गाभिधायी संवृत्तोऽयं शब्दः।

[O. E. *dēor*, 'beast, animal', M. E. *dēre* ; cf. O. H. G. *tior*, O.S. *dier*, O. N. *diur*, O. Frisian *diar*. Goth. *dius*, Prim. Germ. form *dheuz—, for an Aryan base, **dhēws*. The original meaning of the base is smoke, steam, breath etc. Deer is therefore the breathing, living, creature.]

# प्रमोदलहरी

[ निबन्धकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः शास्त्री, एम. ए. ]

## एक एव पर्याप्तः

कन्यायाः पिता भाविनं जामातरमपृच्छत्—"एवम्! रोचते ते मदीया कन्यका ?"

प्रेमिकेणोक्तम्—'रोचते' इति नूनम् अतिलघीयांस्येवाक्षराणि। तस्याः कृते पर्वतादपि निपतेयं प्राणानपि परित्यजेयम्, तस्याः प्रीत्यर्थं यावज्जीवं दास्यमप्याचरेयम्, तस्याः क्लेशनिवारणाय ज्वलदनलमपि प्रविशेयम्—

पित्रा तस्य निवारणाय पाणिरूर्ध्वं प्रसारितः। "साधु साधु! परं न खलु विवाहमिमम् अनुमन्तुमुत्सहे। मिथ्याभाषणे ममापि वर्तते कथञ्चित् पाटवम् एकस्मिंश्च, गृहे एक एव मिथ्यावादी पर्याप्तः।

## सम्यक्

कश्चन पान्थो वनप्रदेशे लुण्ठाकैराक्रान्तः। ते च तस्य द्रव्यादिकं प्रसभमपसार्य, तस्य मुखे वस्त्रं विनिवेश्य वृक्षशाखायां तं बलवद्बबन्ध। कियतश्चित् कालादनन्तरं तेनैव मार्गेण गच्छन्नपरः कश्चन तस्य मुखाद्वस्त्रखण्डमुन्मोचितवान्। पृष्टश्च तेन पथिकः सर्वं दस्युवृत्तान्तमवर्णयत्। ततश्च लुण्ठाकैस्तस्य घटिकायन्त्रवर्जं सर्वस्वमपहृतमिति विज्ञाय तेन पृष्टम्, "अपि त्वं लेशतोऽपि चलितुं न शक्नोषि।?"

"नाहमण्वपि प्रभवामि प्रचलितुम्" इति व्यलपदसौ तपस्वी।

"तथा सति, अहमपि घटिकायन्त्रेण त्वदीयेनाऽऽत्मानं समर्द्धयामि।"

---

# वार्ता

[ संग्राहकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः शास्त्री, एम्. ए. ]

## आमेरिकायां बालोद्वाहः

"मिस्मेयो" समाख्यया कयाचनामेरिकानिवासिन्या विलासिन्या Mother India नामधेये मनस्विजनगर्हणीये पुस्तकपाशे भारतवर्षस्य विशेषतश्चार्यजनाध्युषितस्य भारतवर्षस्य बाल्यविवाहादिविविधदोष-जातकलुषितत्वं प्रतिपादितम्। बाल्यविवाहः सदोषो वा निर्दोषो वा समीचीनो वाऽसमीचीनो वेति नेदं साम्प्रतं विचारपदवीमवतरति। केवलमेतावदेवोच्यते—बहुभिरेव प्राच्यैः पाश्चात्त्यैश्च मनीषिभिः सांसारिकं सुखं शान्तिं च कामयमानैर्मुक्तकण्ठं विनिन्द्यते प्रौढप्रायाणां ललनानामुद्वाह इति विदितमेव सर्वेषाम्। किञ्च, आमेरिकाप्रदेशेऽपि निर्विशङ्कमेव निर्वर्त्यतेऽनतिक्रान्तबालभावानां विवाहविधिरित्यपि न विस्मरणीयम्। साम्प्रतमेव समनुष्ठितमीदृशमुद्वाहमङ्गलम् आमेरिका-प्रदेशान्तर्वर्तिटेनिसीभूभागे। तत्र वरस्य वय ऊनविंशतिर्वर्षाणि वध्वाश्च Elizabeth समाख्याया द्वादश। नवोढा च जुनमासे मातृ-गौरवभाजनं भविष्यतीत्यपि श्रूयते। विवाहसमनन्तरं च सुखेनैव निवसति वधूवरम्। नातिपूर्वं च Eunice अभिधानया रोहिण्या ( नववर्षा तु रोहिणी इति स्मृतिः ) द्वाविंशवर्षीयस्तरुणो पतित्वेन वृतः। हंहो कुमारि मेयो ! स्मर्यतां तावन्नीतिविदां वचनम्—

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति॥

अवबुध्यतां च पारमार्थिकं स्वरूपमात्मनः।

---

## अदृश्यतापादको रश्मिः

प्रायेण विदितमेवैतद्वाचकमहाभागानां यद् अविमारकाख्ये सुप्रथिते नाटकरत्ने केनचन विद्याधरेण नायकायाविमारकाय प्रसादीकृतं किञ्चनाङ्गुरीयकं यस्य दक्षिणपाणौ धारणेन तदात्व एवादृश्यभावमुपयाति मनुजः, सव्ये च सन्धारणेन पुनरपि जनानां प्रतीतिपथम् अवतरति। आङ्ग्ल-शार्मण्यादिविविधभाषोपनिबद्धेषूपाख्यानेष्वपीदृशं वर्णनं बाहुल्येनोपलभ्यते। इदानीन्तनैर्वैज्ञानिकम्मन्यैः सर्वमेतत् कविकल्पनाविजृम्भितमेव न खलु लेशतोऽपि वस्तुस्थितिमनुरुध्यते इति साटोपं समुद्घोष्यते।

साम्प्रतं पुनः मिलानाभिजनेनाध्यापकप्रवरेण मालकिनिमहोदयेन विषयस्यास्य पारमार्थिकत्वं प्रमाणोपन्यासपुरःसरं सर्वेषां समक्षं प्रतिपादितम्। तेन खलु प्रादुर्भावितः कश्चन किरणविशेषो यो हि सम्पातमात्रेणैव लोकलोचनयोरदृश्यं विदधाति मनुजगणम्, शय्यासनादिकं पुनर्यथावदेव तिष्ठति दृष्टिगोचरे। यस्य चोपरि निपतति रश्मिस्तस्य लेशतोऽपि हानिर्न घटते न वास्वास्थ्यमुपजायते, किं बहुना रश्मिपातोऽयं तस्य प्रतीतिपदवीमपि नारोहति।

कियद्भ्यश्चिद्दिनेभ्यः पूर्वं प्रवृत्तायां मिलाननगरे सभायां मालकिनिमहोदयेन मयूखस्यास्य साहाय्यकेनादृश्यभावमुपगमिताः श्रेणिशः समुपविष्टा मनोहृत्य खादन्तः पिबन्तश्च सामाजिका नैव प्रबभूवुः परस्परं सन्द्रष्टुम्।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| August, 1938. | १८६०-शकीये श्रावणे<br>२१श-वर्षस्य ४र्थ-संख्या | Vol. XXI, No. 4 |


## उपदेशपरम्परा

[ स्वनामधन्य-जगद्गुरु-श्रीशङ्कराचार्य-श्रीकाञ्चीकामकोटिपीठाधीशानाम् ]

प्रश्नोत्तर-रत्नमालिका (१)

कः खलु नालंक्रियते दृष्टादृष्टार्थसाधनपटीयान्।
अमुया कण्ठस्थितया प्रश्नोत्तररत्नमालिकया ॥१॥
भगवन्किमुपादेयं गुरुवचनं, हेयमपि च किम् अकार्यम्।
को गुरुरधिगततत्त्वः शिष्यहितायोद्यतः सततम् ॥२॥
त्वरितं किं कर्तव्यं विदुषां संसारसंततिच्छेदः।
किं मोक्षतरोर्बीजं सम्यग्ज्ञानं क्रियासिद्धम् ॥३॥
कः पथ्यतरो धर्मः, कः शुचिरिह यस्य मानसं शुद्धम्।
कः पण्डितो विवेकी, किं विषम् अवधीरणा गुरुषु ॥४॥

---

(१) प्रश्नोत्तररत्नमालिका प्रश्नोत्तरपरम्परया विभज्यमाना संस्कृतभाषायां साधारणाधिकारिणामपि महते एवोपकाराय स्यादिति पूज्यपादैरुपदिष्टं विस्तरेण। केवलमस्माभिः श्लोका एव संगृह्य प्रकाश्यन्ते सांप्रतम्।

किं संसारे सारं बहुशोऽपि विचिन्त्यमानमिदमेव ।
किं मनुजेष्विष्टतमं स्वपरहितायोद्यतं जन्म ॥५॥
मदिरेव मोहजनकः कः स्नेहः, के च दस्यवो विषयाः ।
का भववल्ली तृष्णा, को वैरी यस्त्वनुद्योगः ॥६॥
कस्माद्भयमिह मरणाद् अन्धादिह को विशिष्यते रागी ।
कः शूरो यो ललनालोचनवाणैर्न च व्यथितः ॥७॥
पातुं कर्णाञ्जलिभिः किममृतमिह युज्यते सदुपदेशः ।
किं गुरुताया मूलं यदेतदप्रार्थनं नाम ॥८॥
किं गहनं स्त्रीचरितं, कश्चतुरो यो न खण्डितस्तेन ।
किं दुःखमसंतोषः, किं लाघवमधमतो याच्ञा ॥९॥
किं जीवितमनवद्यं, किं जाड्यं पाठतोऽप्यनभ्यासः ।
को जागर्ति विवेकी, का निद्रा मूढता जन्तोः ॥१०॥
नलिनीदलगतजलवत्तरलं किं यौवनं धनं चायुः ।
कथय पुनः के शशिनः किरणसमाः सज्जना एव ॥११॥
को नरकः परवशता, किं सौख्यं सर्वसङ्गविरतिर्या ।
किं साध्यं भूतहितं, प्रियं च किं प्राणिनामसवः ॥१२॥
कोऽनर्थफलो मानः, का सुखदा साधुजनमैत्री ।
सर्वव्यसनविनाशे को दक्षः सर्वथा त्यागी ॥१३॥
किं मरणं मूर्खत्वं, किं चानर्घं यदवसरे दत्तम् ।
आ मरणात्किं शल्यं प्रच्छन्नं यत्कृतं पापम् ॥१४॥
कुत्र विधेयो यत्नो विद्याभ्यासे सदौषधे दाने ।
अवधीरणा क्व कार्या खलपरयोषित्परधनेषु ॥१५॥
काऽहर्निशमनुचिन्त्या संसारासारता न तु प्रमदा ।
का प्रेयसी विधेया करुणा दीनेषु सज्जने मैत्री ॥१६॥
कण्ठगतैरप्यसुभिः कस्य ह्यात्मा न शक्यते जेतुम् ।
मूर्खस्य शङ्कितस्य च विषादिनो वा कृतघ्नस्य ॥१७॥

कः साधुः सद्वृत्तः, कमधममाचक्षते त्वसद्वृत्तम् ।
केन जितं जगदेतत्सत्यतितिक्षावता पुंसा ॥१८॥
कस्मै नमांसि देवाः कुर्वन्ति दयाप्रधानाय ।
कस्मादुद्वेगः स्यात्संसारारण्यतः सुधियः ॥१९॥
कस्य वशे प्राणिगणः सत्यप्रियभाषिणो विनीतस्य ।
क्व स्थातव्यं न्याय्ये पथि दृष्टादृष्टलाभाढ्ये ॥२०॥
कोऽन्धो योऽकार्यरतः, को बधिरो यो हितानि न शृणोति ।
को मूको यः काले प्रियाणि वक्तुं न जानाति ॥२१॥
किं दानमनाकाङ्क्षं, किं मित्रं यो निवारयति पापात् ।
कोऽलंकारः शीलं, किं वाचां मण्डनं सत्यम् ॥२२॥
विद्युद्विलसितचपलं किं दुर्जनसंगतिर्युवतयश्च ।
कुलशीलनिष्प्रकम्पाः के कलिकालेऽपि सज्जना एव ॥२३॥
चिन्तामणिरिव दुर्लभमिह किं कथयामि तच्चतुर्भद्रम् ।
किं तद्वदन्ति भूयो विधूततमसो विशेषेण ॥२४॥
"दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् ।
वित्तं त्यागसमेतं दुर्लभमेतच्चतुर्भद्रम्" ॥२५॥
किं शोच्यं कार्पण्यं, सति विभवे किं प्रशस्तमौदार्यम् ।
कः पूज्यो विद्वद्भिः स्वभावतः सर्वदा विनीतो यः ॥२६॥
कः कुलकमलदिनेशः सति गुणविभवेऽपि यो नम्रः ।
कस्य वशे जगदेतत्प्रियहितवचनस्य धर्मनिरतस्य ॥२७॥
विद्वन्मनोहरा का सत्कविता बोधवनिता च ।
कं न स्पृशति विपत्तिः प्रवृद्धवचनानुवर्तिनं दान्तम् ॥२८॥
कस्मै स्पृहयति कमला त्वनलसचित्ताय नीतिवित्ताय ।
त्यजति च कं सहसा द्विजगुरुसुरनिन्दाकरं च सालस्यम् ॥२९॥
कुत्र विधेयो वासः सज्जननिकटेऽथवा काश्याम् ।
कः परिहार्यो देशः पिशुनयुतो लुब्धभूपश्च ॥३०॥

केनाशोच्यः पुरुषः प्रणतकलत्रेण धीरविभवेन ।
इह भुवने कः शोच्यः सत्यपि विभवे न यो दाता ॥३१॥
किं लघुताया मूलं प्राकृतपुरुषेषु या याच्ञा ।
रामादपि कः शूरः स्मरशरनिहतो न यश्चलति ॥३२॥
किमहर्निशमनुचिन्त्यं भगवच्चरणं न संसारः ।
चक्षुष्मन्तोऽप्यन्धाः के स्युर्ये नास्तिका मनुजाः ॥३३॥
कः पङ्गुरिह प्रथितो व्रजति न यो वार्धके तीर्थम् ।
किं तीर्थमपि च मुख्यं चित्तमलं यन्निवर्तयति ॥३४॥
किं स्मर्तव्यं पुरुषैर्हरिनाम सदा न यावनी भाषा ।
को हि न वाच्यः सुधिया परदोषश्चानृतं तद्वत् ॥३५॥
किं संपाद्यं मनुजैर्विद्या वित्तं बलं यशः पुण्यम् ।
कः सर्वगुणविनाशी लोभः, शत्रुश्च कः कामः ॥३६॥
का च सभा परिहार्या होना या वृद्धसचिवेन ।
इह कुत्रावहितः स्यान्मनुजः किल राजसेवायाम् ॥३७॥
प्राणादपि को रम्यः कुलधर्मः साधुसङ्गश्च ।
का संरक्ष्या कीर्तिः पतिव्रता नैजबुद्धिश्च ॥३८॥
का कल्पलता लोके सच्छिष्यायार्पिता विद्या ।
कोऽक्षयवटवृक्षः स्याद्विधिवत्सत्पात्रदत्तदानं यत् ॥३९॥
किं शस्त्रं सर्वेषां युक्तिर्माता च का धेनुः ।
किं नु बलं यद्धैर्यं को मृत्युर्यदवधानरहितत्वम् ॥४०॥
कुत्र विषं दुष्टजने, किमिहाशौचं भवेदृणं नृणाम् ।
किमभयमिह वैराग्यं, भयमपि किं वित्तमेव सर्वेषाम् ॥४१॥
का दुर्लभा नराणां हरिभक्तिः, पातकं च किं हिंसा ।
को हि भगवत्प्रियः स्याद्योऽन्यं नोद्वेजयेदनुद्विग्नः ॥४२॥
कस्मात्सिद्धिस्तपसो बुद्धिः क्व नु भूसुरे कुतो बुद्धिः ।
वृद्धोपसेवया, के वृद्धा ये धर्मतत्त्वज्ञाः ॥४३॥

संभावितस्य मरणादधिकं किं दुर्यशो भवति ।
लोके सुखी भवेत्को धनवान्धनमपि च किं यतश्चेष्टम् ॥४४॥
सर्वसुखानां बीजं किं पुण्यं, दुःखमपि कुतः पापात् ।
कस्यैश्वर्यं यः किल शङ्करमाराधयेद्भक्त्या ॥४५॥
को वर्धते विनीतः, को वा हीयेत यो दृप्तः ।
को न प्रत्येतव्यो ब्रूते यश्चानृतं शश्वत् ॥४६॥
कुत्रानृतेऽप्यपापं यच्चोक्तं धर्मरक्षार्थम् ।
को धर्मोऽभिमतो यः शिष्टानां निजकुलीनानाम् ॥४७॥
साधुबलं किं दैवं, कः साधुः सर्वदा तुष्टः ।
दैवं किं यत्सुकृतं, कः सुकृती श्लाघ्यते च यः सद्भिः ॥४८॥
गृहमेधिनश्च मित्रं किं भार्या, को गृही च यो यजते ।
को यज्ञो यः श्रुत्या विहितः श्रेयस्करो नृणाम् ॥४९॥
कस्य क्रिया हि सफला यः पुनराचारवाञ्छिष्टः ।
कः शिष्टो यो वेदप्रमाणवान्, को हतः क्रियाभ्रष्टः ॥५०॥
को धन्यः संन्यासी को मान्यः पण्डितः साधुः ।
कः सेव्यो यो दाता को दाता योऽर्थितृप्तिमातनुते ॥५१॥
किं भाग्यं देहवतामारोग्यं, कः फली कृषिकृत् ।
कस्य न पापं जपतः, कः पूर्णो यः प्रजावान्, स्यात् ॥५२॥
किं दुष्करं नराणां यन्मनसो निग्रहः सततम् ।
को ब्रह्मचर्यवान् स्याद्यश्चास्खलितोर्ध्वरेतस्कः ॥५३॥
का च परदेवतोक्ता चिच्छक्तिः को जगद्भर्ता ।
सूर्यः, सर्वेषां को जीवनहेतुः स पर्जन्यः ॥५४॥
कः शूरो यो भीतत्राता, त्राता च कः स गुरुः ।
को हि जगद्गुरुरुक्तः शंभुर्ज्ञानं कुतः शिवादेव ॥५५॥
मुक्तिं लभेत कस्मान्मुकुन्दभक्तेर्मुकुन्दः कः ।
यस्तारयेदविद्यां, का चाविद्या यदात्मनोऽस्फूर्तिः ॥५६॥

कस्य न शोको यः स्यादक्रोधः, किं सुखं तुष्टिः ।
को राजा रञ्जनकृत, कश्च श्वा नीचसेवको यः स्यात् ॥५७॥
को मायी परमेशः, क इन्द्रजालायते प्रपञ्चोऽयम् ।
कः स्वप्ननिभो जाग्रद्‌व्यवहारः, सत्यमपि च किं ब्रह्म ॥५८॥
किं मिथ्या यद्विद्यानाश्यं तुच्छं तु शशविषाणादि ।
का चानिर्वचनीया माया किं कल्पितं द्वैतम् ॥५९॥
किं पारमार्थिकं स्यादद्वैतं चाज्ञता कुतोऽनादिः ।
वपुषश्च पोषकं किं प्रारब्धं चान्नदायि किं चायुः॥६०॥
को ब्राह्मणैरुपास्यो गायत्र्यर्काग्निगोचरः शंभुः ।
गायत्र्यामादित्ये चाग्नौ शंभौ च किं नु तत्तत्वम् ॥६१॥
प्रत्यक्षदेवता का माता, पूज्यो गुरुश्च कस्तातः ।
कः सर्वदेवतात्मा विद्याकर्मान्वितो विप्रः ॥६२॥
कश्च कुलक्षयहेतुः संतापः सज्जनेषु योऽकारि ।
केषाममोघवचनं ये च पुनः सत्यमौनशमशीलाः ॥६३॥
किं जन्म विषयसङ्गः किमुत्तरं जन्म पुत्रः स्यात् ।
कोऽपरिहार्यो मृत्युः कुत्र पदं विन्यसेच्च दृक्पूते ॥६४॥
पात्रं किमन्नदाने क्षुधितः, कोऽर्च्यो हि भगवदवतारः ।
कश्च भगवान् महेशः शङ्करनारायणात्मैकः ॥६५॥
फलमपि भगवद्भक्तेः किं तल्लोकस्वरूपसाक्षात्त्वम् ।
मोक्षश्च को ह्यविद्यास्तमयः, कः सर्ववेदभूरथ चोम् ॥६६॥
इत्येषा कण्ठस्था प्रश्नोत्तररत्नमालिका येषाम् ।
ते मुक्ताभरणा इव विमलाश्चाभान्ति सत्समाजेषु ॥६७॥

---

# श्रीशिवाजिविजयः

[ निबन्धकः—आर. रङ्गाचार्यः शिरोमणिः ]

( पूर्वानुवृत्तः )

रामदासः। देवि! समाश्वसिहि। समाश्वसिहि। किमित्यकाण्डे महतीयमुत्कण्ठा। निरर्थकानि वचांसि। राजानमधिकृत्य माश्लीलमनुचिन्त्यताम्। शिवाजिराजे मातुः पितुश्च यावद् वात्सल्यं ततोऽपि तस्मिन् मदीयमधिकतरम्। तथापि किं कुर्मः। किमुत्कोचदानेन विधिरलं वशीकर्तुम्। विधिर्नाम अपरः कोऽप्यत्रास्ते यत्तस्मै रोचते स तत्करोति। नासौ कस्यचिदप्यायत्तः। एतावदेव वयं कर्तुं शक्नुमः यद्दैवं प्रार्थयामः। शान्तिकपौष्टिककर्माणि विदध्मः। अम्बां भवानीमर्चयामः।

जी-दे ( स्मृतिमभिनीय ) अहो प्रार्थना! भो आर्य, सत्यं ब्रवीषि। चिरादिव मया देवपूजा न यथावदाचरिता। श्वो भूते मङ्गलमयीम् अस्मत्कुलदेवताम् अम्बां भगवतीम् अभ्यर्थयामहे। तीर्थोदकैरभिषेचयामः। पवित्राणि स्वादूनि निवेदनीयानि समर्पयामः। आराधयामः। आयुष्मतः शिवाजिराजस्य मङ्गलमाशंसामहे। तस्याः करुणामय्या लोकमातुः प्रसादेनैव वत्सोऽयं शिवाजिराजो मे तनयो जातः। अधुनापि तस्या एव अव्याजेन प्रसादेन मम पुत्रश्चिरं जीविष्यति। भद्रं प्रत्यायास्यति च, जरातुरामेकपुत्रां जननीं मां समाश्वासयिष्यति च। ( सोयादेवीं निर्दिश्य ) वत्से! मा शुचः! यदहं त्वां परुषमभाषिषि। प्रेयांसं शिवाजिं वत्सं साम्बजिमन्तरेण मोद्विग्ना भव। तौ नियतं प्रत्यागत्य त्वां प्रेम्णा भक्त्या वात्सल्येन च दृढं परिष्वज्य सुखाकरिष्यतः।

( बहिः कलकलशब्दः )

सचिवः। कोऽयमस्थाने पदशब्दः! कः समागच्छति। किं पौरैर्नियोजितो दूतसमूहः स्यात्।

मन्त्री बीजपुरात्सम्राजा प्रेषितो युद्धवार्ताहरो योधः स्याद्वा !

राम। नहि नहि। यतोऽश्वानां खुराघातशब्दो न श्रूयते।

( प्रतीहारी ससंभ्रमं प्रविश्य )

प्रती। दिष्ट्या विजयतां सपरिवारा ससचिवा महादेवी।

जी-दे। को विशेषः ?

प्रती। देव्या दर्शनाभिलाषुकास्त्रयस्तापसा द्वारदेशमध्यासते। श्रुत्वा-देवी प्रमाणम्।

जी-दे। कस्माद्देशात्ते समागताः।

प्रती। उत्तरस्मादिति प्रतिभाति।

जी-दे। किन्नामधेयास्ते।

प्रती। आत्मानं ते नाम्ना वैराग्यवन्तः (Bairagies) इति वदन्ति।

जी-दे। किं तेषामत्रागमनप्रयोजनम्।

प्रती। ( सोपहासम् ) महादेवीमभियाचितुम्। ते खलु दीना जीर्ण-मलिनवासोधारिणः सितेन भसितेन आसकलं व्याप्ताङ्गाः परिहृतमूर्धजाः श्मश्रुकूर्चविहीनाश्च लक्ष्यन्ते।

जी-दे। ( साश्चर्यम् ) अहो, तापसाः !! किं मामपि याचितुं दवीयसो देशात् समागताः।

राम। कदाचिद्देवीमाशासितुम्।

जी-दे। हा ! अनवसर आशिषः !

मन्त्री। अवधीयताम्। कदाचिदिमे प्रच्छन्नशस्त्रा भवेयुः।

जी-दे। किन्नो जरठामबलां मामपि शस्त्रेण हन्तुं निर्दयाः स्युः !

पण्डितरायः। अथवा, अत्र राजगृहे आत्मानं प्राणैर्वियुक्तमाधातुम्।

जी-दे। भवतु। को दोषः ; कामं प्रवेश्यन्ताम्। मधुरमसंभ्रान्तं मन्दमाभाष्यन्ताम्। किमहो ! आर्यसचिव ! सर्वेऽपि श्रोत्रियास्तापसा अन्येऽपि अतिथयः कामं भोजनदानेन समाराध्यन्ताम्, स्वागतं व्याहि-यन्तामिति किमहं नावोचम् ?

प्रती। ( त्रिः भूमिं ललाटञ्च संस्पृश्य निष्क्रान्तः )

सचिवः। देवि! प्रसीद! मदीयो लेखकः सर्वथा मां प्रतिपालयन्नास्ते। निष्क्रमितुमिच्छामि। अनुमन्यतां देवी।

जी-दे। आर्य! क्षणमिव तिष्ठ। पश्चाद्गमिष्यसि। को जानाति कां वार्तामिमेऽत्राहरन्तीति। उत्तरस्माद् देशात्किल ते समागता इति श्रूयते। मन्ये, तेषां नियतं सविशेषवार्ताः स्युरिति। ( सातङ्कम् ) अहो? कथमिदं मदीयं हृदयमेवमकाण्डे वेपते।

(ततः प्रविशन्ति प्रतिहारिजनेनोपदिश्यमानमार्गा दण्डकमण्डलुकाषाय-धारिणो भस्मत्रिपुण्ड्रमण्डितललाटास्त्रयस्तापसाः )।

राम। (ससंभ्रममुत्थाय मूर्धनि अञ्जलिं कुर्वन् ) सन्तु बहवस्तापस-वर्येभ्यः कुशलवादाः। अस्तु स्वागतं महद्भ्यस्तपस्विवर्येभ्यः।

प्र तापसः। ( दक्षिणं पाणिमुद्धृत्य ) ॐ। सर्वत्र शान्तिः समृद्धिश्च भवताम्।

द्वि-ता। ( तथैवानुवदति )।

तृ-ता। ( न किमपि भाषमाणस्तूष्णीमिव नतशिराः साञ्जलिस्तिष्ठति )

जी-दे। ( तृतीयतापसं दृष्ट्वा ) किमहो! तापसोत्तम! कुतो भवां-स्तूष्णीमास्ते। किं भवता वयं शुभंयुभिराशीर्भिर्नानुगृह्यामहे।

प्र-ता। ( सत्वरम् ) देवि! क्षमस्व। अयमस्माकं भ्राता संप्रति मौनव्रत-माचरति। पूर्वं कृतस्य दुरितस्य शान्तये तपः समनुतिष्ठति।

राम। ( सोत्प्रासम् ) कियच्चिरं सर्वैरप्यस्माभिरयं प्रत्यवेक्षणीयः।

प्र-ता। देवि! तत्रभवत्या देव्या देवतासु स्थिरां भक्तिम्, धार्मिकेषु दयाम्, दीनेषु दानानि, धर्मे रतिञ्च समाकर्ण्य बहून् देशान् पद्भ्यामटन्तो वयं देवीं द्रष्टुं समागताः स्म।

जी-दे। अहो! दवीयःसु बहुषु देशेषु मदीयानि अल्पाल्पानि दानानि किं लोके प्रथितानि? मन्ये अर्थवादोऽयम्।

द्वि-ता। देवि, सकरुणं समाकर्ण्यताम्। वयं जगन्नाथक्षेत्रमगच्छाम।

तत्रैकमग्रजन्मानमपश्याम। असौ देव्या यथाविधि राज्यभरणम्, प्रजासु प्रीतिम्, गोब्राह्मणेषु भक्तिमन्तरेण सुबहु जगाद। श्रीशिवराजः सम्राजौरङ्गजीवेन निजसभां समाहूतः संप्रति "आग्रा" नगरे वसतीति च कथयामास।

जी-दे। ( सश्रद्धातिरेकम् ) किमेतावदेव राजानं शिवाजिमधिकृत्य भवन्तो विदुः।

द्वि ता। देवि ! प्रसीद ! स किल राजा शिवाजिः केनापि हेतुना सम्राजः कोपपात्रमभवत्। इदं निमित्तीकृत्य शिवाजिः सम्राजा कारायां निबद्ध इति च प्रवादः श्रूयते। कियद्दूरमियं कथा यथार्थेति न वयं विद्मः। अपि तु मार्गे गच्छतः कांश्चन सादिनो वयमपश्याम। ते त्ववदन् 'आग्रानगरान्निवृत्य पुण्यपत्तनं प्रति गच्छामः। यतोऽस्माकं महाराजश्छन्नयतिः श्रीमान् शिवाजिराजः अस्मान् स्वपुरं प्रति न्यवर्तयत्' इति च विशेषतो जानीमः।

जी-दे। नन्वार्याः पश्यत। पश्यत। राज्ञः स्वसेनासु प्रीतिम्। केवलमात्मनः क्लेशो भवतु, मा स्वोपजीव्यानाम् इत्याकलयन् किल स राजा स्वकीयान् सादिनः प्रथमं स्वपुरं भद्रं प्राहिणोत्। भोस्तापसोत्तमाः ! समीपतः समागच्छत। सदयं ब्रूत यदधिकं राजानमधिकृत्य भवन्तो विदन्ति।

प्र-ता। देवि ! क्षम्यताम्। नेतः परं वयमधिकं जानीमः। वयं तु तपोधनाः। नास्माकं युद्धेऽभिरतिः। न लोककथायां समादरः। ग्रामाद् ग्रामं नगरान्नगरं पद्भ्यामटन्तः, तीर्थेषु स्नान्तः, देवालयेषु देवता नमन्तः कृतानां दुरितानां शान्तये भगवन्तं प्रार्थयमानाश्च कालं नयामः। जातस्य मरणं ध्रुवमिति धिया मरणात्पूर्वं यत्कर्तव्यं तत्कर्तुकामाः सञ्चराम इति।

जी-दे। ननु तर्हि यद्धनमवशिष्टं मय्यास्ते तदपि दानेषु, होमेषु वा विनियुज्य शान्तया मया भवितव्यमिति भाति। भोस्तापसोत्तमाः ! करुणमनुगृह्यतामियं वृद्धा। अहमतीव दीना मन्दभागिनी। यन्मम नश्वरेषु सांसृतिकेषु विषयेषु नालंबुद्धिः। मामपि कृपया धर्म्ये पथि प्रवर्तयत। ( आत्मगतम् ) अहो ! किं कुर्याम् ! प्रोषितं पुत्रकमधिकृत्य न मे अन्तरात्मा प्रसीदति।

तमहं सकृत् गाढं परिष्वज्य इमां दुरन्तां चिन्तां दूरोत्क्षेपं क्षेप्तुम् इच्छामि। हा! भगवति! अम्ब! कं याचे! कं शरणमुपैमि! अन्धास्मि। शून्या मे दिशः, निरर्थकं जीवितम्। निःसुखा लोकाः। केन सह परिभ्रमामि। कमालपामि। केन वार्तां करोमि। अहो! तापसाः भवन्तः पुण्यभाजः। यद्भवन्तः संसृतिभवक्लेशेन न परिभूयन्ते।

प्र-ता। ( विमनायमानां देवीं दृष्ट्वा करावुद्धृत्य ) देवि! पुनरपि सकृत पुत्रदर्शनसुखं लभस्व! इष्टेन युज्यस्व। शान्तिः समृद्धिः। सर्वं भद्रं भविष्यति (इत्यनुगृह्णाति)।

द्वि-ता। (तमनुवदति)।

जी-दे। ( तृतीयं निर्दिश्य ) भो यवीयस्तापसोत्तम! कुतो भवान दीनामनाथां पुत्रविरहदुःखदूषितां मां स्वस्तिवचनैर्नाशासितुमीहसे। दयतां भवानपि। अस्माननुगृह्णातु।

तृ-ता। (सपदि ससंभ्रमं देव्याः पादयोः पतति, आत्मनः शिरो देव्या अङ्के निदधाति )

जी-दे। ( साशङ्कं सकम्पेन कराञ्चलेन तस्य शिरः परामृशति। किमप्यजानाना किमिदमिति सचिन्ता भवति। )

तृ-ता। देव्याः पुरस्तात् तिष्ठन् झटिति स्वकीयं शिरोवेष्टनमपनयति।

जी-दे। ( साश्चर्यम् ) हा! प्रमोदः !! संमोदः !! आमोदः !! हा! प्रत्यागतं मे जीवितम् !! हा पुत्रक !! ननु प्राप्तोऽसि !! पुरस्तात् तिष्ठन्ति मे प्राणाः !! हा रत्न! हा वत्स! आगतोऽसि! एह्येहि! नन्वालोकितो रमणीयानामन्तः। आह्लादनीयानामवधिर्दृष्टः। वीक्षिता मनोहराणां सीमान्तलेखा। श्रुतं श्रोतव्यम्। दृष्टं द्रष्टव्यम्। पूर्णो मे प्रश्नदोहदः। उत्पन्ना प्रीतिः।

सी-दे। ( ससंभ्रमं सलज्जातिरेकम् ) हा! आर्यपुत्र! त्वद्विरह-कातरो दासीजनो भवन्तमभिवादयते।

सर्वेऽपि। हा ! महाराजः !!! महाराजः शिवाजिः !!! जय !! विजयी भव !!! ( सकुतूहलं सर्वेऽपि नृत्यन्ति )

शि। ( पाणिं मातुः कण्ठादादाय मूर्ध्नि अञ्जलिं दधानः ) अम्ब ! आर्याः ! एषोऽस्मि शिवाजिर्भवतां दासदासः। शृगालानां तीक्ष्णाभ्यो दंष्ट्राभ्यो गृध्राणां तीव्रेभ्यो नखरेभ्यः अम्बाया भवान्याः प्रसादेन आत्मानं संरक्ष्य भवतः पुनः सेवितुमयमागतोऽस्मि।

सो-दे। ( शनैः अवगुण्ठितमुखी ) आर्यपुत्र कुत्रास्ते वत्सो मे साम्बजिः।

शि। प्रिये ! मोत्ताम्य ! भद्रेण वयस्यैः सह स्वैरं परिक्रीडमानः सुखं गूढमास्ते। नहीदानीमसौ आत्मानं बहिः प्रकाशयितुमलम्। यतोऽसौ बीजपुरवर्तिनः क्रूराद्धकान्नितरां बिभ्यदास्ते। नातिचिरादत्र कुशली अकुतोभयं प्रत्यागत्य त्वां नंस्यति। तमधिकृत्य मा पापमाशङ्कस्व। हा ! कष्टम्, प्रियं जनं वत्सलं पुत्रमनालक्ष्येयं दीना देवी नितरां कृशीभूतास्ति। अहो ! प्रेमानुबन्धः !! ( रामदासं विलोक्य ) हा ! गुरुदेव ! नमस्ते। अयमागतोऽस्मि अलसो विद्यार्थीव पुनरपि भवतामुपदेशं ग्रहीतुम्। भो मयूरपण्डित ! किमिति दूरतस्तिष्ठसि। श्वो भूते राज्यभरणमनुचिन्तयितुं त्वामहं प्रतीक्षिष्ये। साधु ! अण्णाजिभद्र ! अपि कुशल्यसि ! समीपतः समेहि। इत आस्व। सर्वेऽपि मन्त्रिणः सचिवाश्च ! सन्तु बहवो धन्यवादा युष्मभ्यम्, यन्मयि असन्निहितेऽपि सन्निहितोऽहमिव राज्यं पर्यपालयत। क्रियतामालयेषूत्सवः। समारोप्यन्तां दीपा वीथीषु, रथ्यासु, वर्गपुराग्रेषु, भौमेषु, प्रासादेषु सर्वत्रापि। पौरजनानां राजा शिवाजिः अपायादात्मानमुन्मोच्य भद्रेण पुनरपि स्वराज्यं प्राप्तवानिति महती आघोषणा सर्वत्रापि क्रियताम् ( निष्क्रान्ताः सर्वे )।

---

# वर्षा-वर्णनम्

[ निबन्धकः—श्रीदुर्गादासगोस्वामी ]

पद्मामुजाश्लेषजघर्मबिन्दुभिः सम्यक् स्रुतः काय इवाच्युतस्य सः ।
विद्युत्परीतः सजलो वलाहकः श्यामः समन्ताद् गगने विजृम्भते ॥१॥
तपात्यये शर्मभरेण केकिनः सन्नद्धबर्हा मुहुरभ्रगर्जितैः ।
सरागमाश्लिष्य सुयौवनाः स्त्रियो नृत्यन्ति चक्रभ्रमिभिर्विलासिनः ॥२॥
अमी समासाद्य बहोर्दिनात् परं समुच्छ्वसन्तं निविडं पयोधरम् ।
अलं रसास्वादनलिप्सवो मुदं पिपासवो बिभ्रति साधु चातकाः ॥३॥
स्निग्धाञ्जनच्छायमदूरलम्बिनं मेघं समालोक्य कुतूहलादियम् ।
वेल्लद्बलाकावलिरम्बरं श्रिता गर्भं दधात्यायतशुभ्रपक्षतिः ॥४॥
विश्रान्तवर्षाम्बुदमेदुरं क्षणाद् भानोः करस्पृक् खलु रञ्जयन्नभः ।
प्रलीयते शक्रधनुर्मनोरमं सतां हि सङ्गः क्षणिकोऽपि वल्लभः ॥५॥
मेघागमे सोत्कलिका तपस्विनी बालाऽचिरात् प्रोषितभर्तुराप्तये ।
साकूतमर्घ्यैः कुटजादिकल्पितैः प्रावृट्प्रशस्तिं कुरुतेऽधुना वधूः ॥६॥
वातायनस्था मलिना वियोगिनी शीतोदकक्षोदवहेन वायुना ।
स्पृष्टा समुद्भिन्नतनूरुहैर्ध्रुवं स्फुरत्कदम्बश्रियमेति काचन ॥७॥
कक्षे रहः पांशुविलुण्ठिताऽपरा प्रबुद्धकामा नवनीरदस्वनैः ।
उच्छूननेत्रस्खलदश्रुधारया वर्षानुकारं विदधाति मानिनी ॥८॥
क्वचिद्वनान्तात् स्फुटकेतकीरजः-संसर्गिवातेरितलोलवेणिका ।
सहाधरेणोच्छ्वसितैः स्वदर्पणं प्रसह्य बाला मलिनीकरोति च ॥९॥
गृहान्तरानीतदिगन्तसौरभैः प्रमत्तवातैर्भृशमुन्मनीकृता ।
आमन्द्रमेघध्वनिभिस्तदन्तरे हतापि हा हन्त पुनर्हताऽबला ॥१०॥
क्वचिन्निशीथे विधुरां तपस्विनीं प्रजाग्रतीं भर्तृगतानुचिन्तया ।
तडित्प्रभाकान्तिभिरम्बुदो मुहुर्भ्रूभङ्गिभिस्तर्जयतीव योषितम् ॥११॥

छायामवेक्ष्यातलदीर्घिकाजले समुन्नतभ्रूश्चकिता विलासिनी ।
कामप्यकस्मादनुभूय वेदनां प्रयाति गेहं त्वरितं नवा वधूः ॥१२॥
दीपं दधाना करपल्लवे शुभं भक्त्यानता कण्ठविवर्तिताञ्चला ।
आकर्ण्य केकां सहसा तरौ वधू-रश्रुस्रजेवार्चति चन्द्रशेखरम् ॥१३॥
सद्यः सरस्नानशुचिश्छलज्जलं कुम्भं दधत्यार्द्रदुकूलकुन्तला ।
विप्रोषितं कान्तमुपागतं सखी-मुखाद् विदित्वा त्वरते गृहे वधूः ॥१४॥
तरङ्गवाचालसरित्तटस्थितं सुगन्धमन्दानिलवीजितं मुहुः ।
क्वचित्तमालद्रुमकुञ्जमास्थितं प्राणेशमालिङ्गति काचिदङ्गना ॥१५॥
क्षणं घनोन्मुक्तहिमांशुकौमुदीमवेक्षमाणा मुदमेत्य निर्भरम् ।
बध्नाति लीलायितबाहुमालया प्रियं रहस्युद्गतयौवना प्रिया ॥१६॥
अश्रान्तवर्षैर्विधुरान्तरात्मनः प्रवासिनः काममनन्यकर्मणः ।
प्रयान्ति यूनो दिवसानि कृच्छ्रतः पयांसि सिन्धोरिव रुद्धरंहसः ॥१७॥
कदाचिदुत्क्षिप्ततरङ्गपाणिना विकम्पिता सम्प्रति यूथिका मुहुः ।
पुष्पच्छलान्मुञ्चति कम्प्रजालकं हर्षेण सिन्धोः खलु पीनवक्षसि ॥१८॥
क्षणं चलन्मेघविलान्तरुद्गतैरुद्भासिता भूमिरलं गभस्तिभिः ।
पुनः समानेव चिरं प्रियागमे छायाभिरेषा ननु संवृतानना ॥१९॥
सद्यः सवातोपलवर्षणात् परं विध्वस्तनीडेषु भयेन विक्लवाः ।
निमील्य नेत्राणि विकम्पिविग्रहा जलार्द्रपक्षान् विधुवन्ति पत्रिणः ॥२०॥
क्वचिन्निवृत्ते खलु वर्षणे मुदा सायातपं कोमलमेत्य पक्षिणः ।
वगाह्य वृष्ट्यम्बुनि सञ्चिते मुहु-र्धुन्वन्ति पक्षानभिहत्य चञ्चुभिः ॥२१॥
आसारसिक्तेषु समं कृषीवलाः क्षेत्रेषु सीरोत्कषितेषु पंक्तिशः ।
उद्यच्छिलीन्ध्रेषु सघर्मविप्रुषः शस्यानि यत्नेन वपन्ति कर्मिणः ॥२२॥
निष्काश्यते सूचितशस्यसम्पदो वप्रात् सघोषं कुशलैः कृषीवलैः ।
सद्यो निखातैः परिवाहवर्त्मभिः प्रवृद्धवेगं जलमाविलं क्वचित् ॥२३॥
निशामुखे पण्यवहात्तरीचयाच्छुरत्प्रदीपावलिकम्प्ररश्मयः ।
क्वचित् सरिद्वक्षसि वीचिचञ्चले सृजन्ति मायामिव सुष्ठु बिम्बिताः ॥२४॥

मेघान्तरालक्ष्यसितांशुचन्द्रिका-पृक्तं सरित्तीरयुगं विराजते ।
शनैश्चलन्त्यास्तरणेर्वणिग्जनैः प्रारब्धगीतिध्वनिभग्नसुप्तिकम् ॥२५॥
दूरप्रदेशागतपण्यजीविनां पोतानरित्रोच्छलदाविलाम्भसः ।
पल्लीजनो द्रष्टुमनाः कुतूहलात् स्रोतस्वतीरोधसि कल्यमागतः ॥२६॥
क्वचित्तु नीलाञ्जनमेदुराम्बुद-स्फुरत्तडिद्भिः शवले तमोमये ।
गृहं व्रजन् पिच्छिलवर्त्मनि स्खलन् निशि प्रकामं पथिको विपद्यते ॥२७॥
सद्यः पयोदेन रसाभिषिक्ता मुग्धा धरित्री चिररुद्धमन्युः ।
उच्छ्वासमात्रं परितो जहौ यद् बाष्पायते तत् सपदीति मन्ये ॥२८॥

उद्यच्छ्वासा प्रबलपवनैः केशरैर्धूसराभा
म्लानज्योतिर्वदनसुषमा मुक्तकेशा पयोदैः ।
चञ्चच्चूडा नवविरहिणीतुल्यतामत्र काले
प्राप्ता प्रावृट्प्रकृतिरखिला दर्दुरैर्भिन्नकण्ठा ॥२९॥

नीपैराढ्यैः पुलकिततनुर्वर्षणैः स्विन्नकाया
मेघध्वानैः स्खलितवचना स्पर्शनैर्वेपमाना ।
पर्णैः पाण्डुः सजलनयना वारिदैः स्तम्भितात्मा
वात्यारम्भे प्रकृतिरभवद् मूर्छिता चाधिसत्त्वा ॥३०॥

सम्प्राप्ते खलु दुर्दिने मिलितयोर्यूनो रथाङ्गाह्वयोः
सानन्दं नयतोर्दिनं क्षणमिव ध्वान्तेऽपयाते हठात् ।
आलोक्येन्दुकरान् भृशं विलपतोर्मध्ये वहत्यापगा
नेत्रासारवतीह हन्त नियतेर्दीनेषु वामा दृशः ॥३१॥

अभ्रश्याममहः स्फुरन्ति तडितो गम्भीरघोषैर्मुहु-
र्नृत्यन्ति भ्रमिभिः क्वचिच्च शिखिनो गर्जन्ति भेकाः क्वचित् ।
सारङ्गाः सुखिनः श्रयन्ति सरितो व्यक्ता वलाकाः क्वचि-
न्मन्दं पुष्परजोविमर्दसुरभिः शीतानिलः सर्पति ॥३२॥

प्रचण्डाघोषाढ्यप्रलयमरुतः सूचितः पूर्वरङ्गो
मुहुर्विद्युद्दामस्फुरितजलदैर्मेदुरश्चान्तरीक्षम् ।

अमूः संलक्ष्यन्ते मुखरककुभो भीतवेल्लद्बलाकाः
समं स्तब्धीभूता प्रकृतिरखिला जृम्भते प्रावृडुच्चैः ॥३३॥
मरुन्मन्दं मन्दं वहति सुरभिप्रौढनीपैः प्रवृद्धो
विनिद्राः कन्दल्यो मुखरितहरिन्मत्तमण्डूकघोषैः।
समुद्वर्हः केकी क्वचिदनुसृतो मेघमल्लाररागः
समुद्गच्छद्विद्युन्निविडजलदो विष्वगश्रान्तवर्षः ॥३४॥

---

## शोकसंवादौ

व्यतीते सौरश्रावणस्य प्रथमदिवसे विद्वद्वरेण्यः कलिकाता-संस्कृत-महाविद्यालयस्य विश्वविद्यालयस्य च न्यायशास्त्राध्यापकपदमधिष्ठितपूर्वः महामहोपाध्यायो गुरुचरणतर्कदर्शनतीर्थ-महोदयः परलोकं प्रस्थितवान्। अन्ततश्चायमेक एवावाशिष्यत प्राचीनेषु नैयायिकसमाजेषु, तमप्यद्य संगृह्णता कृतं प्रतीपेन दैवेन यदनुरूपं वङ्गदेशविद्वेषस्य। वयमेतत्परिजनानां शोकेषु सतीर्थतामाचरामः।

व्यतीते सौराषाढस्य सप्तदशमिते शनिवासरे सायं षड्वादनसमये कलिकातास्थ-प्रसिद्ध-ठाकुरवंशाभिजनस्य प्रख्यातकीर्तेः कालीकृष्णठाकुर-महोदयस्य पौत्रो राजा प्रफुल्लनाथठाकुरमहोदयः तस्य 'आलमबाजार'स्थितोद्यानवाटिकायां भौतिकं देहमपहाय स्वकर्मार्जितं लोकं प्राप्तवान्। सज्जनोचितविविधसद्गुणभूयिष्ठस्य अदूरपञ्चाशे वयसि वर्तमानस्य परिषत्-सभ्यप्रकाण्डस्यास्यैवमकालतिरोधानेन समं तत्परिजनैर्वयमपि नितरां शोकक्षोभमनुभवामः। महत्यस्मिन्न् शोके इदमेकमाश्वासस्थानमपि पश्यामो यदस्य विद्यानवद्याः स्वानुरूपाः पञ्च पुत्रा वर्तन्ते, ते च यथाचारं पितुरेव पथा विचरन्तः कुटुम्बानाम् अनुजीविनाम् अस्माकञ्च मनःशल्यम् अपाकरिष्यन्ति। वयमेतस्य परिजनानां शोकशान्तिं कामयामहे।

---

# प्रशान्तरत्नाकरम्

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

( पूर्वानुवृत्तम् )

राजा—(स्वगतम्) अहो प्रभावः सुरायाः ! (प्रकाशम्) प्रिये लीलावति, एवं क्रियतां वयस्यसन्तोषाय ।

लीला—यथाज्ञापयति महाराजः । (सनृत्यं गीतं करोति)

( गीतम् )

कुञ्जवने कुसुमकुलं किरति सुस्मितम्
मलयपवनकम्पिततनु पतति पुञ्जितम् ।
कुरु सुमधुरमालिकां हृदयदयितरञ्जिकां
दयितकण्ठमपि शोभय सुखय शाश्वतम् ।
सुरया कुरु मानसं विरहितघनतामसम्
अधरे धर मधुराधरमेतु ललितनन्दितम् ।

वसन्तकः—('अधरे धर मधुराधरमेतु ललितनन्दितम्' इत्यनुगायन् नृत्यकौशलमभिनयति )

राजा—वयस्य, किं मत्तोऽसि ?

वसन्तकः—न हि न हि, इन्द्रोऽस्मि; एष स्वर्गः, एषा देवभोग्या सुधा ! एषा च उर्वशी नृत्यगीतकुशला श्रोत्रं नेत्रञ्च नः परितर्पयति । अयि उर्वशि, कथं विरतासि, नृत्यं सङ्गीतञ्च कुरु, तथैव कुर्वती मह्यं रोचसे, न तु तूष्णीं तिष्ठन्ती ; तदलं मौनेन । अहमपि सुधां पीत्वा परमानन्दं विन्दामि । अयि मेनके, उपनय सुधाम् !

राजा—भोः, यदि भवानिन्द्रः, अहन्तर्हि कः ?

वसन्तकः—(विचिन्त्य) त्वं चन्द्रो भव । स किल बहुतरताराकलत्रो-

ऽपि स्वैः कलत्रैरपरितुष्यन् इतस्ततो ललितललनाकुलं विचिन्वन् गुरुपत्नीमपि तारां न जहौ, तत् त्वमपि तस्यैव तुलामर्हसि।

राजा—भो देवराज, अहल्यापि तव का ?

वसन्तकः—अहल्या नाम ? ( विचिन्त्य ) सा मम गुरुपत्नी।

राजा—तत् कथं चन्द्रस्यैव दोषं पश्यसि ?

वसन्तकः—आम्! तर्हि नाहमिन्द्रो भवामि। चतुराननो भवामि।

राजा—आम्! स्वसुतां कामयमानश्चतुराननोऽपि अनपराद्ध एव।

वसन्तकः—धिक् शान्तम्! तिष्ठतु तावदेष दग्धाननश्चतुराननः, अलं मम तेनापि कलङ्किना, तत् को नु खलु भवामि ? ( विचिन्त्य ) आं दृष्टम्! अहमिदानीं कैलासपतिर्महादेवो भवामि। यस्य महान्तमेव महिमानं मुनयोऽपि समामनन्ति।

राजा—भृशमप्रशस्तस्यापि कुजस्य मङ्गलसंज्ञेव भृशमकिञ्चनस्य तस्य महादेव इति संज्ञा। ततस्तव तद्भावोऽपि न मे दृढं रोचते।

वसन्तकः—तस्य अकिञ्चनत्वं कथं जानासि ?

राजा—बहुभिरेव कारणैः। तथाहि पश्य—

अस्थीन्याभरणानि चर्म वसनं भस्माङ्गरागस्तथा
स्नेहाभाववशाज्जटात्वमभजन् केशाः कठोरक्रमाः।
प्रेताः पारिषदाः प्रियः पितृवने वासो वृषो वाहनं
द्वारि द्वारि वनीयकस्य विधिना दुःखाकरं जीवनम्॥

वसन्तकः—आं गृहीतम्! तदलं मे तया महादेवतयापि, यत्र सुचिरशिक्षिता भिक्षावृत्तिरनुवर्तनीया।

लीला—हताश, तत् को वा भविष्यसि ?

वसन्तकः—पश्यामि तावत् ( विचिन्त्य स्मृत्वा नृत्यं नाटयित्वा ) आं! दृष्टम्! दृष्टम्!!

राजा—किं दृष्टम् ?

वसन्तकः—लीलावती भविष्यामि, यत्र प्रियवयस्यो मे कामेश्वरोऽपि

सुतरामायतते। हुम्! इदानीं नाहं तवायत्ता, त्वमेव सम्प्रति ममायत्तोऽसि। इदानीमुपलालय माम्। एषा गायामि, एषा नृत्यामि, अयि, यूथिके, सुधामुपनय।

यूथिका—एषा सुधा ( इति सुरामुपनयति )।

राजा—( सुरां पिबन् ) अहो माहात्म्यं सुरायाः! पीतया खल्वनया।

अन्धः पश्यति शून्यमार्गचलितानश्वांस्तथा हस्तिनः
मूको गायति गीतिकां पिकरुतैः खञ्जोऽप्यलं नृत्यति।
निःशेषं लयमेति दुःखवलयो जाड्यं परं लीयते
मद्यं मोदमहार्णवोत्थममृतं किं काम्यमस्मात् परम्॥

वसन्तकः—अयि देवि सुरे, प्रसीद, एतावतो दिवसानुपेक्षमाणस्य मे महान्तमपि दोषं क्षन्तुमर्हसि ( भूमौ प्रणमति )।

राजा—प्रिये, लीलावति, एष सुतरां मत्तो वसन्तकः! अयि प्रिये!

रम्भादिभिस्त्रिदिवधाम वृथैव गर्वं
धत्ते त्वया विरहितं सुकृतेन हीनम्।
त्वन्नेत्ररश्मिभिविनिपातमसीमपुण्यैः
प्राप्ता वयं सुकृतिनो नितरां वरेण्याः॥

अयि प्रिये,—कण्ठे ममार्पय भुजौ परिपीड्य गाढं
पीनस्तनौ घटय वक्षसि कामतप्ते।
रक्ताधरामृतरसं परिपातुकामं
कामेश्वरं जनय तन्वि समाप्तकामम्॥

( इति यथोक्तं व्यवस्यति )

( नेपथ्ये—परित्रायतां परित्रायतां महाराजः )

राजा—(श्रुतिमभिनीय) अये, किन्नु खल्विदम्? महानेष तोरणद्वारे कोलाहलः! तत् किन्नु खलु स्यात्?

प्रविश्य प्रतीहारी—जयति जयति महाराजः।

राजा—महाश्वेते, क्व एष कोलाहलः?

प्रतीहारी—देव, दुर्भिक्षपीडितानां प्रजानां राजकरं दातुमशक्तानां गृहा राजपुरुषैरग्निना दाह्यन्ते। तत्प्रतीकाराय ता एव भवन्तमभिगताः।

राजा—धिक्! अत्रापि प्रजापरित्रासः! नास्ति अत्रापि निस्तारः? महाश्वेते, गच्छ, कथय प्रजाः, तासां स्वकृतस्यैव दुष्कृतस्य फलमिदम्, तदस्य नास्ति प्रतीकारः। यदि तथापि न निवर्तेरन्, तदा कर्कशाभिः कशाभिः सन्ताड्य निवर्तय।

प्रतीहारी—( स्वगतं ) अहो स्वामिनो निष्ठुरता!

राजा—गच्छ सत्वरं स्वनियोगमनुतिष्ठ।

प्रतीहारी—यथाज्ञापयति स्वामी ( निष्क्रान्ता )।

राजा—धिक् कष्टम्! प्रतिपदमेव प्रत्यूहव्यूहेन विघ्नितप्रसरो जन्मवतां मनोरथलाभः। स्वार्थमुग्धं जगत् सन्ततमेव स्वार्थमभिसन्धत्ते, न पुनः परार्थमपि। यद्येवं किमिति मयापि परार्थं प्रवर्तितव्यम्?

( नेपथ्ये—हा हा हताः स्मः, मारिताः स्मः, कठोरकशाघातेन मारिताः स्मः )।

राजा—( श्रुत्वा ) दुष्टाः स्वकर्मफलमनुभवन्तु। अयि प्रिये, लीलावति!

सर्वं जगद् व्रजतु नाशमकालहीनं
किन्तेन मे तव च शाश्वतरागभाजोः।
पीत्वा तवाधरसुधामधरेण तृप्तः
कालं चिरं गमयितास्मि लयं प्रसीद॥
परिष्वजस्व मां कण्ठे निरन्तरमनन्तरम्।
अधरामृतपानाय प्रसादं मयि योजय॥

( यथोक्तं कर्तुं व्यवसितः )

लीला—प्रियतम, एष एव स्वर्गो ननु?

राजा—प्रिये, अथ किम्।

लीला—प्रियतम, सरयूवक्षसि नौविलासो मे दृढं रोचते।

राजा—यदि तुभ्यं रोचते, नचिरं कारयिष्यामि ।

लीला—अनुगृहीतास्मि ।

वसन्तकः—( उत्स्वप्नायते ) अयि यूथिके, कथं दूरीभवसि, परिष्वङ्ग्स्व माम्, अलं विलम्बेन, एहि ।

यूथिका—हताश, ध्वंसस्व ।

• लीला—आम् ! उद्घाटितं चित्त-रहस्यं सुराप्रभवेन वैक्लव्येन । अयि यूथिके, गच्छ, वसन्तकमुपलालय ।

यूथिका—धिक् ! व्रीडितास्मि । तत् पुनरपि सुरां पीत्वा व्रीडां नाशयामि ।

राजा—प्रिये, किन्तु खलु त्वं—

व्याजेन भुजबन्धं मे परिमुञ्चसि चञ्चले !
चिरमेवं गतायास्ते प्रमोदः किं न रोचते ॥

( आलिङ्ग्य चुम्बितुं व्यवसितः ) ।

प्रविश्य प्रतीहारी—देव, अत्याहितम् !

राजा—किमिव ?

प्रतीहारी—देव, परिजनसकाशाद् अस्या आर्याया लीलावत्याः कृते सुघटितस्य लोकोत्तरहीरकहारस्य वृत्तान्तमुपलभ्य देवी शीलवती राजभवनं प्रति सहीरकहारमागच्छन्तं मणिकारश्रेष्ठिनं विश्वावसुं छलेन आकारितवती ।

राजा—ततस्ततः ?

प्रतीहारी—ततो लोकोत्तरं तं हीरकहारं दृष्ट्वा पृष्टोऽसौ यावच्छलेन बहून् वाक्यभेदानकथयत् तावदेव कोपकषायितलोचना देवी तस्य मिथ्याभाषणं व्याजीकृत्य कारागारनिक्षेपं समादिशत् । श्रुत्वा देवः प्रमाणम् ।

राजा—अहो चण्डस्वभावा देवी ! प्रिये, लीलावति, अचिरं मोचनीयः सहीरकहारो विश्वावसुः । तदेषोऽहं नातिचिरात् सिद्धसमीहितः प्रत्या-

वर्तिष्ये। त्वमपि वसन्तकं प्रबोध्य ससखीजना गृहाभ्यन्तरं प्रविश। ( निष्क्रान्तः )।

लीला—एवमस्तु। अहो शीलवत्या देवीपदाधिकारगर्वः! भो वयस्य, वयस्य, उत्तिष्ठ।

वसन्तकः—भवति, क्षुधया बाधितोऽस्मि। क्व नु खलु प्रियवयस्यो गतः?

लीला—( कर्णे ) एवमेवम्। तदेहि पानभोजनप्रबन्धाय गृहं प्रविशामः।

वसन्तकः—अहो देवीप्रभावः! भवतु साम्प्रतं क्षुधोपशमाय अभ्यन्तरं गच्छामः। ( उत्थाय यूथिकां प्रति ) अरे दास्याः पुत्रि, हस्तालम्बं देहि, यावन्न पतितो भवामि।

यूथिका—हताश, यद्येवं, कथमेतद् विषं निपीतम्?

वसन्तकः—पुनर्न पास्यामि, दास्याः पुत्रि, पुनर्न पास्यामि। तदेहि।

यूथिका—एहि हताश, एहि।

लीला—अहो! कदा पुनः प्राणेश्वरमासादयेयम्। तमपश्यन्त्याः क्षणोऽपि मे कल्पवत् प्रतिभाति ( निष्क्रान्ताः सर्वे )।

द्वितीयाङ्कः समाप्तः

---

# तृतीयाङ्कः

( ततः प्रविशति वीरबलमेघवर्णप्रमुखैः पुरुषैः सहितो रत्नाकरः )

रत्ना—भो भो वीरबलप्रमुखाः प्रधानपुरुषाः! यथाकालमेव यूयं सङ्केतस्थानमुपगताः। एषा घोरान्धकारभीमा रजनी, अस्यामिदानीं नैव सन्दृश्यते स्वदेहोऽपि, विशेषतश्चात्र परितः पादपप्रतानप्रच्छन्ने भूमिभागे। तथाहि—

कृष्णाभवसनच्छन्नदेहानां तिमिरोच्चये ।
पुरो विलीयते देहः कालिन्द्यां नीलपद्मवत् ॥

सम्प्रति समग्रं जगत् स्वपिति, विश्रान्ताः सुतरां सर्वत्र जनकोलाहलाः, अन्तरान्तरा केवलमाकर्ण्यते सुदूरं काननमधितिष्ठतां नातिप्रकाशो घोषो यामघोषाणाम्! विकटो रावश्च कौशिकानाम्! तदारावश्रवणसमुद्वेजिताश्च क्वचित् क्वचित् प्रान्ते शब्दायन्ते भवनसारमेयाः। एष एव नः कालः स्वाभीष्टं निर्वर्तयितुम्। यावद् यावदेव भीषणः प्रपञ्चस्तावत् तावदेव समुत्साहः समुदेति नः स्वान्तेषु। यस्मादपरे भीता निवर्तन्ते, तत्रैव वयमानन्देन प्रवर्तामहे। वयं कुतोऽपि साहसान्न बिभीमः, प्राणिघातमतिनिष्ठुरमपि क्रीडामात्रं विद्मः। तथाहि—

कातर्यं श्रयतां शुचा प्ररुदतां स्वेषां जनानां पुरो
हत्वा गेहपतिं कृपाविरहितैरस्माभिरस्मत्प्रियम्।
ऐश्वर्यं परिगृह्य साहसवशादाशाशतैरन्वहं
रत्नागारमकारि यस्य नियतं वृद्धिः समाशास्यते ॥

वयस्य, वीरबल !

वीर—आज्ञापय।

रत्ना—अद्य सुमहत् साहसमनुष्ठातव्यम्।

वीर—किमिति ?

रत्ना—अवधानेन समाकर्ण्यताम्। अयमदूरे संदृश्यते सर्वतः श्वेतो राजप्रासादः।

वीर—अथ किम्! सुष्ठु खल्वेष शोभते।

रत्ना—आम्, शोभत एव। तथाहि—

वर्णैः सितैरेष विलिप्तकायस्तमःप्रतानेषु विशालवर्ष्मा।
नीलाम्बरे चन्द्रिकयेव चन्द्रः संदृश्यते नेत्रजुषां सुखार्थम् ॥

तदत्रैव महत् साहसमनुष्ठेयम्।

वीर—निरूप्यतां प्रकारः।

रत्ना—प्रासादं परितो दृश्यते कश्चित् समुच्चः प्राकारः।

सर्वे—आम्, दृश्यते।

रत्ना—एनमतिक्रम्य अभ्यन्तरे प्रवेष्टव्यम्। वीरबलप्रमुखा यूयं पञ्चैव मया सह अभ्यन्तरं गमिष्यथ, शिष्टाश्चापरे मया समादिष्टेन पथा कृत्यं प्रवर्तयिष्यन्ति।

वीर—वयस्य, समुच्चः किलैष प्राकारः, तदस्यातिक्रमे का गतिः ?

रत्ना—वीरबल, अविदिततत्त्व इव पृच्छसि। तदलमाशङ्कया, तत्र गतिमहमेव देक्ष्यामि।

वीर—स्थाने खलु निगृहीतोऽस्मि।

मेघवर्णः—स्वामिन्, किञ्चित् प्रष्टुमिच्छामि।

रत्ना—किमिव ?

मेघवर्णः—स्वामिन्, अस्य राजप्रासादस्याभ्यन्तरे सन्ति तत्परिरक्षणाय नियुक्ताः सशस्त्राः प्रहरिणः सैनिकाश्च, तदभ्यन्तरं प्रविष्टानामस्माकमात्मपरिरक्षणे कीदृश उपायः ?

रत्ना—तत्रापि पूर्वमेव मया कृतः प्रबन्धः।

सर्वे—कीदृशः सः ?

रत्ना—परितः पर्यालोच्यताम् अस्ति कश्चिद् बाह्यो जनो नवेति ?

मेघवर्णः—( इतस्ततो निपुणमन्विष्य ) स्वामिन्, न कश्चिद् दृश्यते।

रत्ना—तदिदानीं श्रूयताम् ?

सर्वे—अवहिताः स्मः।

रत्ना—अस्ति मया दत्तदासेन कायस्थेन छद्मना किञ्चित् पत्रं सुविहितलेखं कारितम्।

वीर—कः कस्मै लिखति, किञ्च तत् पत्रम् ?

( क्रमशः )

## ग्रन्थनिकषः

[ परीक्षकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः शास्त्री एम्. ए. ]

वरदाम्बिकापरिणयचम्पूः । विजयनगराख्यप्रख्यात-चरम-हिन्दु-स्वतन्त्र-राज्याधिपतिमहाराजाधिराजाच्युतरायमहादेव्या श्रीतिरुमलाम्बया प्रणीता । महामहोपाध्यायगिरिधरशर्मचतुर्वेदैः पञ्चतीर्थैः श्रीहरिदत्तशर्ममिश्र विरचितया संस्कृतटोकयोपेता । पञ्जाबसंस्कृतपुस्तकालयाध्यक्षैः मोतीलाल-बनारसीदास इत्येतैः (Motilal Banarasi Das, Said Mitha Bazar, Lahore) प्रकाशिता । मूल्यं रूप्यकद्वयम् ।

अहो नु खलु कोऽप्ययं सौभाग्यातिशयः श्रीमत्यास्तिरुमलाम्बायाः, श्रीमत्या गैर्वाण्या वाण्याः, श्रीमतो भारतवर्षस्य, श्रीमतां च भारतवर्षीयाणां यद् ग्रन्थरत्नमिदं ग्रन्थागाररत्नाकरगर्भान्निष्क्रम्य लोकलोचनगोचरताम् आपतद्विमलतमैर्मयूखजालैः समुल्लासयति हृदयकन्दराणि सहृदयानाम् । प्रायेण हि प्राक्तनदुरदृष्टोपनतेन मरणसोदर्येण दारिद्र्येण सहजापि नवनवोन्मेषशालिनी प्रज्ञा, वसन्तवाताहतेव शिशिरश्रीः, प्रतिदिनं विच्छिन्नाभ्रविलायं विलीयते* । अनुकूलभागधेयोपायनीकृताशेषसम्पदामपि ललनानां प्रज्ञाप्रकर्षो वैदुष्यविशेषश्च प्रायेण समूलघातं विनिहन्ति पतिप्रेमकल्पपादपम्, कदलीच्छेदं च समुच्छिनत्ति विश्रम्भव्रततिकाम् । स्त्री च संस्कृतं पठन्ती, संस्कृतभाषयालपन्ती, संस्कृतया सरस्वत्या स्वान्तरं भावं प्रकाशयन्ती, संस्कृतया च गिरा काव्यनाटकाख्यानाख्यायिकादि विरचयन्ती शिरःशूलमेव समुत्कोपयति सामाजिकानां प्रादुर्भावयति च हासं वदनसरोजेषु प्राक्तनजनानाम् ।† सुदुर्लभकवित्वशक्तिसम्पन्ना अपि प्रायेण प्रद्वेषम् एव बध्नन्तीतर-

---

* Chill penury repressed their noble rage,
And froze the genial current of the soul.

† तथाच मृच्छकटिके विदूषकवचनम्—

मम तावद् द्वाभ्यामेव हास्यं जायते, स्त्रिया संस्कृतं पठन्त्या, मनुष्येण च

कवयितृषु, सुदूरं च समुत्सारयन्ति श्रद्धां शास्त्रवचनेषु। एषा पुनः कवयित्रीशिरोमणिस्तिरुमलाम्बा लोकातिगकवित्वशक्तिसमुपेतापि विमलविद्यावदातापि विविधभाषानिष्णातापि सङ्गीतशास्त्रसुनिपुणापि भर्त्तृवाल्लभ्यमधिगतवती, भर्तुर्विश्रम्भभाजनतामासादितवती, कविकुटुम्बकानि नियतं रक्षितवती, वाजपेयादिविविधाध्वरानुष्ठानं च सततं प्रोत्साहितवतीत्यहो भागधेयप्रकर्ष एतस्याः। तथाचात्मानमधिकृत्योक्तमनया—

"इत्येकवाराकर्णनमात्र-दृढावधारित-नव्य-काव्य-नाटका[ख्यानाख्यायिका]-*लङ्कार-पुराणागम-रहस्य-सारस्यानुबन्ध–समिन्धान–स्वाभाविक–प्रतिभानुभावया, विद्याविशेष-निरवद्य-विद्वद्वर-सकल-कविकुल-श्रवणानन्द-चिन्तितानन्ताभीष्ट--फलाश्रयणविश्राणन--कामगवीभवदशेषभाषा--विषयसविशेषोन्मेपचतुरिम-गर्भितसरसप्रबन्धसन्दर्भया, विविधविद्याप्रगल्भराजाधिराजाच्युतरायसार्वभौम-प्रेम†[...]सर्वस्व-विश्वास-भुवा, निरुपाधिक-महोपकार-निर्माणधर्म-निर्मल-हृदयया, निखिल-लिपि-विलेखन-नियतवितरण-कृतहस्त-हस्तारविन्दया, विरिञ्चिचञ्चल-नयनानखाञ्चल समुदञ्चित-विपञ्ची-प्रपञ्चितपञ्चम-

---

काकलीं गायता। स्त्री तावत् संस्कृतं पठन्ती दत्तनवनास्येव गृष्टिरधिकं सूसूशब्दं करोति। मनुष्योऽपि काकलीं गायन् सूक्ष्मसुमनोदामवेष्टितो वृद्धपुरोहित इव न मे रोचते ( छाया )।

"A morning sun, and a wine-bred child and a Latin-bred woman, seldom end well." *English Proverb*.

* अस्मत्सविधे या प्रतिलिपिर्वर्तते मूलस्य तत्र नाटकशब्दोत्तरं कानिचिदक्षराणि त्रुटितानीति प्रतिभाति। अत एवास्माभिः आख्यानाख्यायिका-पदं स्वकल्पितमिति कृत्वा कुण्डलीद्वयीमध्ये विनिवेशितम्। सरूपमहोदयेन पुनः सर्वत्रैव चरणतलेनावमर्द्य साम्प्रतिकीं संस्करणशैलीं त्रुटितादीनामनुल्लेखेन, यथेच्छं च पाठपरिवर्तनेन स्वीयं लोकविलक्षणं स्वातन्त्र्यमेव प्रकटीकृतम्।

† अत्रापि मूले कानिचिदक्षराणि त्रुटितानि वर्तन्ते।

मधुरिमोदश्चन-विकस्वर-कण्ठस्वरया, विपुल-तलातल-विहारविनोदसाकारा-वतीर्ण-शतपर्णासन-वरवर्णिनी-मति-निर्णायिकया, नानादेशप्रतिष्ठिता[ नेक ]* विरचितवाजपेय-पौण्डरीक-सर्वतोमुखमहाध्वरद्विजवर-वितीर्यमाणाशीर्विशेष-परिपोषित-भाग्य-सौभाग्यया नियत-रक्षित[...?]कवि-कुटुम्बया, तिरुम-लाम्बया निर्मितं वरदाम्बिकापरिणयं नाम चम्पूकाव्यम् आचन्द्रतारकमभि-वर्द्धताम्" इति।

काव्यस्यास्य टीकाकृतोऽपि वैदुष्योद्भासितदिगन्तरालाः परेतप्रायायाः संस्कृतभाषायाः समुज्जीवने विनिबद्धपरिकराः सर्वतन्त्रस्वतन्त्रधिषणा महामहोपाध्यायबिरुदभाजो व्याकरणाचार्याः श्रीमन्तो गिरिधरशर्मचतुर्वेदा आगरा-संस्कृतमहाविद्यालयप्रधानाध्यापकाः पञ्चतीर्थहरिदत्तशर्माणश्च। संस्कर्त्तारश्च पञ्चनदीयविश्वविद्यालये संस्कृताचार्याः संस्कृतविभागा-ध्यक्षाश्च पञ्चनदाक्सफोर्ड-पारिसादिप्राच्यपाश्चात्त्यविविधविश्वविद्यालयेभ्यः समधिगतोच्चावचबिरुदव्राता निरुक्तादिविषमग्रन्थपरिष्कर्त्तारः श्रीमन्तो लक्ष्मण-सरूपाः। प्रकाशकाश्च परोलक्षाणां संस्कृतपुस्तकानां विक्रेतारः निखिल–संस्कृतपुस्तकालयमध्यमणि–लवपुरीयपञ्जाबसंस्कृतपुस्तकालयाध्यक्षा मोतीलालबनारसीदाससमाख्याः श्रेष्ठिप्रवराः। सरूपमहोदयलिखिता चाङ्गल-भाषामयी भूमिका M. A., M. O. L. प्रभृतिबिरुदराजिविभूषितेन जगदीशशास्त्रिमहोदयेन संस्कृतभाषामारोपिता। श्रीमता च श्रीशचन्द्रदत्तेन M.A. परीक्षायां† प्रबन्धरूपेण मूलचम्प्वा आङ्गलभाषामयानुवादो विहित इति कापीयमुत्सवपरम्परापतिता।

---

* अत्र मूले त्रुटितमक्षरद्वयमिति विभाव्य सरूपमहोदयेन स्वकपोल-कल्पितं सर्वथा च क्लिष्टम् नेकेत्यक्षरद्वितयं स्वयमेव सन्निवेशितं परं बन्धन्यपि न प्रायोजि न वा पादटीकायां किमप्युदलेखि।

† आशास्यते च कौटिलीयार्थशास्त्रस्येव वरदाम्बिकापरिणयचम्प्वाः प्रसादेनानल्पाः परीक्षार्थिनः Ph. D. बिरुदमधिगच्छेयुः।

इदानीं सटीकाभूमिकस्य समग्रस्य ग्रन्थस्य गुणदोषावालोच्येते। तत्र प्रथमतस्तावत् सरूपमहोदयस्य Introduction (भूमिका) विचार-पदवीमवतरति। "It is the *only* Sanskrit romance written by a woman". "No other queen of that epoch or of any other epoch *could have composed* **a work** in a classical language." "स्त्रीजनविरचितैषैवैकाख्यायिका।" "तात्कालिकी वापरकालिकी वा काप्यपरा राज्ञी मृतभाषया पुस्तकं नैव प्रभवेद्विरचयितुम्" [ सरूप-महोदयेन न केवलं काव्यादिनिर्माणे अपि तु यस्य कस्यापि ग्रन्थस्य विरचने राज्ञीनां शक्त्यभावः प्रतिज्ञायते इत्यत्र विशेषतोऽवधानीयं विद्वद्भिः ] इत्यादीनि वचनानि "यस्य विवाहस्तस्य गोतम्" इति न्यायेनैवोपनिबद्धानीति बोद्धव्यम्। एतेषामनुवाचनेन—"नाहं दूती तनोस्तापस्तस्याः कालान-लोपमः" इति पद्यार्द्धं स्मरणसरणिमधिरोहति। अपि नाम करामलकी-कृतानि सरूपमहोदयेन सप्तद्वीपायां वसुमत्यां वृत्तानि वर्तमानानि च निखिलानि काव्याख्यायिकादीनि, यत् only इत्युच्यते। अपि न विदित-मेतत् सरूपमहोदयस्य यत् संख्यातिगानि पुस्तकानि वैदेशिकानामुप-प्लवेनात्यन्ताय प्रनष्टानि येषां नामान्यपि न श्रुतानि, साम्प्रतं च भारतभूमेस्तेषु तेषु प्रदेशेषु प्रतिदिनमेव नवं नवं पुस्तकजातमापतति नयनवर्त्मनीं विपश्चिताम् इति। अपि न समाकर्णितं सरूपमहोदयेन राजशेखरवचनम्—"पुरुषवद् योषितोऽपि कवीभवेयुः। संस्कारो ह्यात्मनि समवैति न स्त्रैणं पौरुषं वा विभागमपेक्षते। श्रूयन्ते दृश्यन्ते च राजपुत्र्यो महामात्रदुहितरो गणिकाः कौतुकिभार्याश्च शास्त्रप्रहतबुद्धयः कवयश्च"* इति। राजपुत्र्यश्चेत् कवयः श्रूयन्ते दृश्यन्ते च तर्हि तासां ग्रन्थनिर्माणशक्त्यभावे बीजं किं वावधारितं सरूप-महात्मना यत् तेन No other queen could have composed a work

---

* न केवलं देवभाषायामेव प्रकटीकृतं पाण्डित्यं भारतवर्षीय-रमणी-मणिभिः, आङ्लभाषायामपि तरुदत्त-सरोजिनीनायडुप्रभृतीनां काव्यानि सशिरः-कम्पं श्लाघ्यन्ते सहृदयैः।

in a classical language इत्युक्तम्। न खलु सप्तद्वीपमिदं महीमण्डलं कूपो वोदुम्बरो वा येनैवमास्थातुं शक्येत।

विनिक्षिप्यतां तावत् कृपादृष्टिर्बुक्कनरपतेर्द्वितीयकुमारस्य सहधर्मिण्या गङ्गादेव्या विरचिते वीरकम्परायचरिते येनात्मनो वचनजालानां सर्वथा वैतथ्यं स्वयमेव प्रतिपद्येत। ईदृशा वाग्डम्बरा अनभिज्ञजन-व्यामोहका अपि नितरामुद्वेजयन्ति हृदयानि विदितवेदितव्यानामिति जानन्तु सरूपमहोदयाः।

"The present work contains the longest compound which is to be found in Sanskrit language"* इत्यादि-वचनानामप्येषैव गतिः।

---

* निरन्तरान्धकारित-दिगन्तर-कन्दलदमन्द-सुधारसबिन्दु-सान्द्रतर-घनाघन-वृन्द-सन्देहकर-स्यन्दमान-मकरन्द-बिन्दु-बन्धुरतर-माकन्दतरुकुल--तल्प-कल्प-मृदुल-सिकता-जाल-जटिल-मूल-तल-मरुवक-मिलदलघु-लघु--लय-कलित-रमणीय-पानीय-शालिका-बालिका-करारविन्द--गलन्तिका--गलदेला-लवङ्ग--पाटल-घनसार-कस्तूरिकातिसौरभ-मेदुर-लघुतर-मधुर-शीतलतर-सलिलधारा-निराकरिष्णु-तदीय-विमल-विलोचनमयूख-रेखापसारित-पिपासायास-पथिक-लोकान् (पृः ३१-३२)।

अत्र चालत्या टीका—

निरन्तरेति। माकन्दवृक्षैः निचितत्वात् निरन्तरं निरवकाशम् अत एवान्धकारितं च दिगन्तरं दिगन्तरालप्रदेशो येन तादृशः, तथा कन्दलन् नपपल्लवीभवन् अमन्दसुधारसबिन्दुभिः अमृतकिरणैः सान्द्रतरः यः घनाघनवृन्दः तस्य सन्देहकरः वर्षन्मेघनिचयस्पर्धी च यः स्यन्दमानमकरन्दबिन्दुभिः बन्धुरतरः माकन्दतरुः तस्य कुलं तस्य तल्पकल्पं यत् मृदुलं सिकताजालं तेन जटिले मूलतले मरुवकैः मिलन्तः ये अलघवः बहवः लघुलयाः खसाख्यतृणविशेषाः तैः कलिता याः पानीयशालिकाः प्रपाः तासु नियुक्ताः या बालिकाः तासां करारविन्दस्थिता या गलन्तिका भृङ्गाराः ताभ्यः गलत् च्यवत् यद् एलालवङ्ग-पाटल (शतपत्र-गुलाव)-घनसार (कर्पूर)-कस्तूरिकाभिः अतिसौरभेण मेदुरम् अतिशयगन्धाढ्यं लघुतरं शीघ्रपचनशीलं मधुरं शीतलतरं च सलिलं तस्य

ततश्च सुबन्धुविरचिताया वासवदत्तायाः संस्कर्तुः L. H. Gray महोदयस्य सरणिमनुसरता श्रीमता सरूपेण चम्पूगताः केचनालङ्काराः प्रदर्शिताः। अलङ्काराणां लक्षणानि च विशेषनैरपेक्ष्येणैव त्रिचतुरेभ्यो ग्रन्थेभ्यः समुद्धृतानि। न जानीमः किमित्यस्थानेऽयं संरम्भः सरूपमहोदयस्य। छात्रत्वमनतिवर्तमाना बाला एवेत्थङ्कारं विलक्षणमात्मीयं पाण्डित्यं प्रकटीकुर्युर्न पुनः सरूपसदृशाः प्रवीणाः। अत्रेदमपि विस्मयमुपजनयति सहृदयानां यद् दण्डिनमारभ्याप्पयदीक्षितं यावत् सर्वेषामेवालङ्कारिकाणां वचनानि समुद्धृतानि केवलं निखिलालङ्कारिकगर्वसर्वङ्कषस्य पण्डितराजजगन्नाथरायस्य नामापि न स्मृतम्। न जानीमः किं वापराद्धं पण्डितराजेन सरूपमहोदयस्य यत् स एवमवज्ञोपहतो व्यधायि। न च तस्य ग्रन्थकर्तुरर्वाचीनत्वमेवात्र हेतुतामुपगच्छति न पुनरन्यत् किमपीति वक्तव्यम्, तथात्वे कालिदासकविताविवेचनावसरेऽलङ्कारचिन्तायाः समुच्छेदापातात्, प्रायेण हि सर्वेषामेवालङ्कारिकप्रबन्धानां कालिदासतः परभावित्वात्।

२५-शे पृष्ठे उक्तम्—Virodha or antithesis is defined thus इत्यादि। यद्यपि विरोधस्य एकद्वा भेदा Antithesis इत्यत्रान्तर्भवन्ति, तथापि प्रायेण Epigram वा Oxymoron वालङ्कारिकाणां सम्मतो विरोध इत्यत्र नास्ति कापि विप्रतिपत्तिः। तथाहि पाश्चात्यालङ्कारिकप्रवरैर्बेनमहोदयैर्व्यधायि लक्षणम्—

The Antithesis, in its fullest sense, consists in explicitly stating the contrast implied in the very meaning of a term or a fact.

'To be a blessing, and *not a curse*.'
'I love the country, *I hate the town*.'
'*Men may come and men may go*
But I go on for ever.'

---

धाराः तन्निराकरिष्णवः याः तदीया बालिकासम्बन्धिन्यो विमलविलोचनमयूखरेखाः ताभिः अपसारितः पिपासाजन्य आयासः अध्वश्रमः यस्य तादृशः पथिकलोकः यत्र तान् इत्यर्थः। प्रचुराम्रपादपः प्रभूतप्रपश्च चोलदेश इति भावः।

'That low man seeks a little thing thing to do,
Sees it and does it ;
This high man, with a great thing to pursue,
Dies ere he knows it.'

अन्तिम उदाहरणद्वितये संस्कृतालङ्कारिकाणां मतेन व्यतिरेकालङ्कारः स्फुट एव ।

आलङ्कारिकशिखामणिराचार्यदण्डी पुनरत्रापि विरोधमिच्छति । तथाहि तदुपन्यस्तं विरोधोदाहरणम्—

कूजितं राजहंसानां वर्द्धते मदमञ्जुलम् ।
क्षीयते च मयूराणां रुतमुत्क्रान्तसौष्ठवम् ।।

Another form of expository Antithesis is the contrast of terms, not generically, but specifically opposed.

दण्ड्याचार्योपन्यस्तम्—

तनुमध्यं पृथुश्रोणि रक्तौष्ठमसितेक्षणम् ।
नतनाभि वपुः स्त्रीणां कं न हन्त्युद्यतस्तनम् ।।

इति विरोधोदाहरणमत्रैवान्तर्भविष्यति ।

Epigram अलङ्कारस्य लक्षणं यथा—

The Epigram is an apparent contradiction in language, which, by causing a temporary shock, rouses our attention to some important meaning underneath.

"वितरणोज्ज्वलवृत्तिरप्यवितरणोज्ज्वलवृत्तिः" सर्वथा 'The king is dead, long live the king' इत्यस्यैव सब्रह्मचारी Epigram अलङ्कारस्यैवोदाहरणं भवितुमर्हति न पुनः antithesis इत्यस्य ।

नव्यास्तु विषयेऽस्मिन् Oxymoronअलङ्कारमेवेच्छन्ति, न पुनरेपिग्रामम् । तथाच Fowler महोदयेनोक्तम्—Oxymoron (Rhet.); 'sharp dull', The combining in one expression of two terms that are ordinarily contradictory, and whose exceptional coincidence is therefore arresting. *A cheerful* pessimist ; *Harmonious discord* ;

His honour rooted in dishonour stood,
And faith unfaithful kept him falsely true.

अत एव "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायेन संस्कृतालङ्कारिकसम्मतस्य विरोधस्य वा विरोधाभासस्य वा Oxymoron वा Epigram वा प्रतिशब्दो युज्यते न पुनः Antithesis इति।

भूमिकाया २९तमे पृष्ठे सरूपमहोदयेन प्रलपितम्—Sanskrit poetry is full of the description of the charm [charms?] of a woman, but descriptions of the man's physical beauty are rare. There are *three* poems only, named (1) Vishnupādādikeśānta-varṇana (ii) Śivapādādikeśānta-varṇana and (iii) Śiva-keśādipādānta-varṇana by Śaṅkarācārya, which in the guise of panegryrics, addressed to deities really describe a man's feet, thighs, waist, navel, chest, shoulders, neck, mouth, eyes, forehead and hair. The stotras contain, however, description of a man by a man, but the present work contains what nowhere exists in the vast Sanskrit literature, a description of a man by a woman.

"नारीणां सौन्दर्योपवर्णनं संस्कृतसाहित्ये प्रचुरतयोपलभ्यते, नरस्य पुनः शारीरसौन्दर्यसमुपवर्णनं विरलमेव। केवलं शङ्कराचार्यविरचितं विष्णुपादादिकेशान्तवर्णन-शिवपादादिकेशान्तवर्णन-शिवकेशादिपादान्तवर्णन-समाख्यं पद्यत्रितयं वर्तते यत् किल देवतोद्देशेन स्तुतिव्यपदेशेन पुरुषस्य पादोरुमध्यनाभिवक्षोंऽसकण्ठमुखनयनललाटकेशमुपवर्णयति। स्तोत्रेषु पुनरेषु पुरुषविरचितं पुरुषवर्णनमेव समस्ति, अस्मिंस्तु काव्ये समुपलभ्यते—यत् किल सुविशाले संस्कृतसाहित्ये क्वापि नोपलभ्यते—नारीकर्तृकं नररूपोपवर्णनम्।"

एतत् सर्वं सरूपमहोदयप्रलपितं स्मारयति खलु मनीषिवर्यस्य भर्तृहरेः सुभाषितम्—

"पत्रं नास्ति यदा करीरविटपे दोषो वसन्तस्य किं
नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम्।
धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं
यद्धात्रा निजभालपट्टलिखितं तन्मार्जितुं कः क्षमः॥"

इति, प्राचीनानां चाभाणकम्—
"नायं स्थाणोरपराधो यदेनमन्धो न पश्यति, पुरुषापराधः स भवति।" इति।

( क्रमशः )

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

September, 1938 | १८६०-शकीये भाद्रे २१श-वर्षस्य ५म-संख्या | Vol. XXI, No. 5


## श्रीरामायणे परमान्नविभागः


[ निबन्धकः—मीमांसाशिरोमणि-मीमांसातीर्थ-श्रीसोमसुन्दरशास्त्री ]


श्रीमद्वाल्मीकिरामायणे बालकाण्डे षोडशसर्गे वाल्मीकिमहर्षिणा परमान्नविभागः श्लोकत्रयेणाभिहितः । तद्घट्टीयश्लोकाः—

कौशल्यायै नरपतिः पायसार्धं ददौ तदा ।
अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ॥
कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् ।
प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ॥
अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः ।
एवन्तासां ददौ राजा भार्याणां पायसं पृथक् ॥

अत्र कैश्चिद् व्याख्याकर्तृभिरभिवर्णितार्थस्य श्रीवाल्मीकिरामायणार्थोपबृंहकस्य वासिष्ठदौर्वासाध्यात्मरामायणाद्यनेकग्रन्थप्रतिपादितसंप्रदायार्थस्य तेजस्तिमिरयोरिव परस्परविरोधः संदृश्यते । तत्र कथं वा सिद्धान्त इति विचिकित्सायां सत्यां प्रथमतः पूर्वपक्षमुपपाद्य सप्रमाणकैर्वचनैः साधकबाधक-

निरूपणपूर्वकतया सिद्धान्तः प्रतिपाद्यते। तथाहि दशरथपुत्रकामेष्टिय जन-समये प्राजापत्यपुरुषात्सन्तानप्रदं देवनिर्मितं परमान्नमत्यादरेण परिगृह्य प्रथमतस्तत्परमान्नं द्विधा विभज्य अर्धं कौशल्यायै दत्त्वा तदनन्तरमव-शिष्टार्धं पुनर्द्विधा विभज्यैकभागं सुमित्रायै दत्त्वा अवशिष्टमेकभागमपि द्विधा विभज्यांशद्वयेऽप्येकांशं कैकेय्यै दत्त्वा तदनन्तरमवशिष्टमष्टमांशं पुनरपि सुमित्राया एव ददौ इति व्याख्याय एतदभिप्रायोपष्टम्भकतया तदग्रिमग्रन्थे ( स० १८, श्लो० १० )।

"कौसल्याऽजनयद्रामं दिव्यलक्षणसंयुतम्।
विष्णोरर्धं महाभागा पुत्रमिक्ष्वाकुनन्दनम्॥"

इति वचनस्थार्धशब्दस्य सामरस्यमपि संभवतीति व्याख्याकृद्भि-रभिहितम्। तदभिप्रायानुरोधेन विभक्तपायसविभागानुसारेण श्रीराम-लक्ष्मणादीनामंशभाक्त्वमेव सङ्गच्छते। रामस्त्वर्धांशवान, लक्ष्मणश्चतुर्थांश-वान्, भरतस्त्वष्टमांशवान्, शत्रुघ्नोऽप्यष्टमांशवानिति। एवञ्चेद्रामायणार्थोप-बृंहकाध्यात्मरामायणादीनां स्कान्दप्रभृतिमहापुराणानां च भोजराजकालि-दासप्रभृतिमहाकविप्रणीतग्रन्थानां च वाल्मीकिरामायणाग्रिमग्रन्थस्य च महान् विरोधः सङ्घटते। तथाहि अध्यात्मरामायणे बालकाण्डे स० ३ उमां प्रति महेश्वरोक्तिः—

ऋष्यश्रृङ्गवशिष्ठाभ्यामनुज्ञातो ददौ हविः।
कौसल्यायै स कैकेय्यै चार्धमर्धं प्रयत्नतः॥
ततः सुमित्रा संप्राप्ता जिगृध्नुः पौत्रिकीं चरुम्।
कौसल्या तु स्वभागार्धं ददौ तस्यै मुदान्विता॥
कैकेयी च स्वभागार्धं ददौ प्रीतिसमन्विता।
उपभुज्य चरुं सर्वास्त्रियो गर्भसमन्विताः॥
देवता इव ता रेजुः स्वभासा राजमन्दिरे। इति॥

दशरथः हव्यवाहनात् पायसपात्रं प्रतिगृह्य कौसल्यासमक्षं जगाम, तत्र तत्समीपे कैकेय्यप्युवास, तदा दशरथस्तत्पायसं द्विधा विभज्यार्धं कौसल्यायै

दत्त्वाऽन्यार्धं कैकेय्यै ददौ। ततस्तस्मिन्नेव समये सुमित्रापि तत्रागता, तदा कौसल्याकैकेय्यावुभे अपि स्वस्वभागार्धं ददतुरिति तात्पर्यार्थः। तत्रैव द्वितीयसर्गे ब्रह्मादिदेवान् प्रति विष्णूक्तिः—

कश्यपस्य वरो दत्तस्तपसा तोषितेन मे।
याचितः पुत्रलाभाय तथेत्यङ्गीकृतं मया॥
स इदानीं दशरथो भूत्वा तिष्ठति भूतले।
तस्याहं पुत्रतामेत्य कौशल्यायां शुभोदये॥
चतुर्धात्मानमेवाहं सृजामीतरयोः पृथक्। इति॥

अत्रत्येन चतुर्धात्मानमिति वचनेन भगवतो नारायणस्य श्रीमद्रामावतारे चतुर्धा परिणाम एव सूचितो भवति। किञ्च तत्त्वसङ्ग्रहरामायणे बालकाण्डे दशरथं प्रति विष्णूक्तिः—

"इदन्तु पायसं देहि पत्नीभ्यस्तव पार्थिव।
तस्मात्तव जनिष्येऽहं मां विभज्य चतुर्विधम्॥
जनिष्येऽहं सपत्नीकः सपर्यङ्कससहायुधः।
इत्युक्त्वा पायसे साक्षात्प्रविष्टोऽन्तरधीयत।" इति॥

अत्रापि मां विभज्य चतुर्विधमित्युक्त्या चतुर्धा विभाग एव सूचितो भवति। अपि च स्कान्दे देवान् प्रति विष्णूक्तिः—

"आत्मानं चतुरो भागांस्तुल्यरूपान्महाबलान्।
रामरूपमहं यामि लक्ष्मणश्च ममानुजः॥
भरतो नाम धर्मात्मा शत्रुघ्नस्तदनन्तरम्।" इति॥

अनयाप्युक्त्या चतुर्धा विभाग एव स्पष्टतया प्रतिपादितो भवति। अगस्त्यरामायणे—

"चतुर्थांऽशस्तु रामः स्याद्विष्णोस्तल्पन्तु लक्ष्मणः।
शङ्खस्तु भरतो नाम चक्रं शत्रुघ्न ईरितः।" इति॥

अत्रापि चतुर्थांऽशस्तु राम इत्यादिकण्ठोक्त्या सर्वेषां समानांशभाक्त्वं निश्चितं भवति। श्रीमद्विदर्भराजविरचितचम्पूरामायणबालकाण्डे—

"कौसल्यायै प्रथममदिशद्भूपतिः पायसार्धं
प्रादादर्धं प्रणयमधुरं केकयेन्द्रस्य पुत्र्यै ।
एते देव्यौ तरलमनसः पत्युरालोच्य भावं
स्वार्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम् ।" इति ॥

अत्रापि विदर्भराजेनाध्यात्मरामायणस्थविभागक्रम एवोररीकृतः । श्रीमत्कविजनसार्वभौमेन कालिदासेनाप्ययमेवार्थो रघुवंशाख्यकाव्ये दशमसर्गे कण्ठोक्त्या प्रकटितः । तथाहि—

"ते बहुज्ञस्योचितज्ञे पत्न्यौ पत्युर्महीक्षितुः ।
चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ।" इति ॥

एवं च सति पूर्वोक्ताशेषग्रन्थप्रतिपादितपायसविभागानुसारेण कौसल्यायाः पादांशभाक्त्वं तथैव कैकेय्या अपि पादांशभाक्त्वम्, सुमित्राया अर्धांशभाक्त्वं च सङ्गच्छते । किञ्च श्रीमद्रामायणे बालकाण्डे सं० १८ श्लो० १२—

"भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः
साक्षाद्विष्णोश्चतुर्भागः सर्वैस्समुदितो गुणैः ।
अथ लक्ष्मणशत्रुघ्नौ सुमित्राऽजनयत्सुतौ
वीरौ सर्वास्त्रकुशलौ विष्णोरर्धसमन्वितौ ॥"

इत्यत्र "साक्षाद्विष्णोश्चतुर्भागः" इत्यनेन "विष्णोरर्धसमन्वितावि"त्यनेन च वाक्यद्वयेन भरतस्य साक्षाद्विष्णोश्चतुर्भागभाक्त्वम्, लक्ष्मणशत्रुघ्नयोरपि उभयोरर्धांशभाक्त्वं च कण्ठोक्त्या प्रतिपादितं भवति । एवन्निखिलग्रन्थवचनार्थे निश्चिते कथं दशरथेन सर्वसिद्धान्तविरुद्धतया परमान्नविभागो विभक्त इति पूर्वपक्षे संप्राप्ते सर्वग्रन्थसमरसतया सिद्धान्तः प्रतिपाद्यते । तथाहि—पूर्वोदाहृतश्लोकाः स्पष्टार्थं पुनरपि प्रकाश्यन्ते । कौसल्याया इत्यादि श्लोकाः । अत्र श्लोकत्रयस्यापि प्रातिपदिकार्थस्तु संप्रदायानुसारेणाभिवर्ण्यते, तथाहि—

नरपतिः=दशरथः, पायसार्धम्=प्राजापत्यपुरुषाल्लब्धपायसे समार्धांशम्,

कौसल्यायै=कौसल्यानिमित्ताय, ददौ=अखण्डयत् ; "दो अवखण्डने" इति धातोर्लिटि प्रथमपुरुषैकवचने निष्पन्नमिदं रूपम् । एतेन कौसल्योद्देश्यत्वेन पायसे समार्धविभागः सूचितः । तथा च यदर्धं प्रथमतो दशरथेन विभक्तम्, तत् कौसल्यासंबन्धीत्यर्थो लभ्यते । तदा विभागाव्यवहितकाले अर्धादर्धमिति ; एतस्मिन्नर्थेऽर्धं ददौ चापीति च-शब्दापिशब्दयोः प्रयोग-बलात् तयोरन्यतरान्वयेन पूर्वार्धवृत्ति कौसल्यायै इति पदं समुच्चीयते । ददौ अर्धादर्धमिति पदानि च आवर्तितानि भवन्ति । तथा चायमर्थः—कौसल्यायै कौसल्याख्यज्येष्ठभार्यायै । अत्र "चतुर्थी संप्रदाने" इति सूत्रेण चतुर्थी । अर्धात् पूर्वविभक्तसमार्धांशात्, अर्धम्=समचतुर्थभागम्, ददौ=दत्तवान । अर्धादर्धम्=समचतुर्थभागम्, सुमित्रायै=द्वितीयभार्यायै ददौ=दत्तवान, ।

अमृतोपमम्, सर्वोत्तमरसवदमृताख्यवस्तुसदृशम् । अवशिष्टार्धमत्र कर्मधारयः । अवशिष्टं यदर्धं चतुर्थांशमित्यर्थः ।

अवशिष्टार्धमत्र षष्ठीसमासः । तथाचावशिष्टस्यार्धांशस्यार्धम्= चतुर्थांशम् पुत्रार्थकारणात् पुत्रप्रयोजनहेतोः । कैकेय्यै च तृतीयभार्यायै ददौ दत्तवान । एतदनन्तरं कुण्डलमध्याक्षराणि पठितव्यानि । पुनः पुनश्च सुमित्राया एव द्वितीयभार्यायै एव, अनुचिन्त्य=कौसल्याकैकेय्योरभि-प्रायं च "आत्मानं चतुरो भागान् तुल्यरूपान् महाबलान्" इत्यादिप्राजापत्य-पुरुषवचनं च सम्यगालोच्येत्यर्थः, ददौ दत्तवान । एवं सर्वग्रन्थसमरस-तयाऽभिहितसंप्रदायार्थः पण्डितैरूहनीयः । अत्रेदमेव वाल्मीकिहृदयं नान्य-दित्येव वक्ष्यमाणतात्पर्याभिनयेन दृढीकुर्मः ।

तथाहि—प्राजापत्यपुरुषप्रसादलब्धपायसभक्षणकालानुक्रमेणैव रामादीना-मुत्पत्तिर्घट्टे प्रतिपादिता । तत्क्रमपर्यालोचनया तत्कृतपायसान्नभक्षणमपि एवमेव बुद्धिमद्भिरूहनीयं भवेत् ।

तथाहि—प्रथमतः कौसल्योद्देश्यकविभक्तपायसार्धे समार्धं कौसल्यायै दशरथेन दत्तम् । सा तत्तदानीमेवाभक्षयत् । तदर्धे च यदवशिष्टं

चतुर्थांशः, तत्सुमित्रायै दत्तम्। सा तत्परिगृह्यावशिष्टार्धांशस्य विभागो-दशरथेन कथं वा विभज्यते, किमयमतिप्रेमास्पदीभूतकेकयराजसुताया एवा-वशिष्टसमार्धांशं सर्वमपि ददाति वा, आहोस्वित् तत्रावशिष्टं यथांशं सर्वासां विभज्य ददाति वा पश्यामि इति जिज्ञासमाना सती तद्दत्तं स्वहस्त-गतं पायसे चतुर्थांशमभुक्त्वैव तूष्णीं स्थिता। ततः परं दशरथः अवशिष्टपायसार्धं सर्वमपि अतिप्रेमास्पदीभूतकैकेय्युद्देश्यकत्वेनोद्धृत्य तस्यै प्रदानसमये सत्यां ज्येष्ठभार्यायाम् अधिकांशप्रदानं न कनिष्ठभार्याया उचितं मन्वानः ( दशरथः ) तस्मिन्नर्धेऽर्धं चतुर्थभागं तस्यै ददौ। सा तत्तदात्व एव भुक्तवत्यभूत्। ततः स दशरथस्तदवशिष्टचतुर्थांशं पुनरपि कौसल्यायै दातुमुद्युक्तोऽभूत्। तदा पायसभक्षणे स्वाभिलाषातिशयमन्त-र्निगृह्य गौरवाद्यद्दुपभुक्तन्तदलमित्युक्त्वा पूर्वदत्तमपि परमान्नमभुक्त्वैव तूष्णीं निरीक्षमाणायाः सुमित्राया एव दीयतामिति तं दशरथं चोदयामास। तदा कैकेय्यपि गौरवात् कौसल्यावाक्यमेवानुससार। ततो दशरथः द्वितीय-भार्याया अधिकांशदानं नैव न्याय्यमिति किञ्चिदालोच्य—

"लक्ष्मणश्चैव शत्रुघ्नः सुमित्राया जनिष्यतः"।

इति वायुपुराणोक्तरीत्या प्राजापत्यपुरुषवचनं सम्यक् बुद्ध्वा इयन्तु दैव-गतिरिति मनसि निश्चित्य तदवशिष्टचतुर्थांशं सुमित्राया एव ददौ इति दिक्। इदमेव वाल्मीकिहृदयम्। अगस्त्यदुर्वासोवसिष्ठविश्वामित्रप्रभृतिभिस्तत्कृत-रामायणेष्वयमेवार्थः स्पष्टतया प्रकाशित इति सर्वं समञ्जसम्।

नचैवंविधचतुर्भागभाक्त्वेन श्रीमद्भगवतो राममूर्त्तेः लक्ष्मणादिषु सर्वोत्कृष्ट-त्वभंगः, इतरावतारेभ्य एतस्य पूर्णत्वभंगप्रसङ्गश्च स्यादिति वाच्यम्। "रामरूपमहं यामि" "चतुर्धात्मानमेवाहमि"त्यादिपूर्वोदाहृतेषु बहुषु वचनेषु अस्मच्छब्दपुरस्कृततयाऽभिहितत्वात् सत्स्वखिलेषु ( वचनेषु )-अङ्गेषु शिरोमात्रस्य यथोत्तमाङ्गत्वम्, तथैव श्रीराममूर्तेः सर्वेष्वंशेषु प्राधान्यं सम्यक् सूचितं भवति। लक्ष्मणभरतशत्रुघ्नानां सुग्रीवप्रभृतिनिखिलवानरा-दीनां च जननं श्रीरामसाहाय्यार्थमेवेति सर्वेष्वपि ग्रन्थेष्वभिवर्णितत्वात्,

अन्येष्वपि मात्स्यकौर्माद्यवतारेष्वेकरीत्या सगणस्य भगवतो नारायणमूर्तेरवतारवैचित्र्यस्यासंभवाच्च श्रीराममूर्तेर्लक्ष्मणादिषु प्राधान्यम्, अन्येष्ववतारेषु मध्ये श्रीरामावतारस्य पूर्णावतारत्वनिर्णयश्च सर्वेष्वपि ग्रन्थेषु पण्डितैरकुटिलदृष्टिभिरूह्नीय इति "सर्वं समञ्जसम्। अपि च विष्णोरर्धं महाभागम्" इत्यत्र 'पुंस्यर्धोऽर्धं समेऽंशके' इत्यमरकोशबलात् समांशपरत्वमेव वर्तते, न समार्धभागपरत्वम्। यद्वा अर्धस्तुरीयभागे स्यात् इत्यमरकोषोक्त्या विष्णोरर्धमित्यनेन विष्णोश्चतुर्थांश इत्यपि वक्तुं शक्यत्वान्न कोऽपि दोष इति दिक्॥

---

# पुनरपि बाल्योद्वाहः

[ निबन्धकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः शास्त्री एम. ए]

प्रायेण स्मर्यत एव प्रियपाठकमहाभागैर्यदतीतायामाषाढ-संख्यायां बाल्यविवाहविषये कोऽपि वृत्तान्तः प्रकाशितोऽस्माभिः। इदानीं प्रवृद्धे कलौ बहव एव लाङ्गूलेन वियुक्तस्य जम्बूकस्य सरणिमनुसरन्तो बाल्यविवाहादीनां सनातनसमुदाचाराणां दोषाविष्करणे सहस्रजिह्वतामात्मनः प्रकटयन्तीति पुनरपि विषयेऽस्मिन् परिक्लेश्यते तपस्विनी लेखनी। तत्र 91 Chowringhee, Calcutta इत्यतः प्रकाशितात् Truth पत्रात् कलिकाततः प्रचारितात् सुप्रथितात् Hindusthan Standard पत्राच्चानूद्य पाठकानां प्रमोदाय च हिताय च किमप्यत्र निवेश्यते।

पाश्चात्यप्रदेशेषु बहव एव कुमार्यः षोडशाब्दात् पूर्वमेव प्रसूतिभाजो भवन्ति। विद्यालयादिषु चापरिणतमतयस्तरुणास्तरुण्यश्च निराबाधं संक्रीडमानाः प्रथम एव वयसि चुम्बनालिङ्गनान्युपक्रमन्ते, क्रमेण च "मीनं च मेषं च वृषं च भुङ्क्ते" इति न्यायेन सर्वा मर्यादा व्यतिलङ्घयन्ते। आङ्गलभूमे राजधानीतो लण्डनपुरादद्दूर एव विलसति कुमारीपुरं (Maidenhead) नाम किमपि नगरम्। प्रथमतस्तावत् कुलकन्यकावृत्तमक्षतमनु-

तिष्ठन्तीनां कुमारीणां बाहुल्याद् व्यपदेशोऽयमात्मानमलभत*। इदानीं पुनर्गरीयस्त्वात् कालस्य महीयस्त्वान्मोहस्याणीयस्त्वाद्धर्मस्य लघीयस्त्वाच्च लज्जाशीलत्वस्यात्रत्यास्त्रयोदशवर्षीया एव भूयस्यः कुमार्यो जनयित्रीपदमधिकुर्वते। एवञ्च बन्ध्यासुतानामिव कुमारीणां दौर्लभ्यतः कुमारीपुरमिदं विपरीतलक्षणयाऽन्वर्थाभिधानं संवृत्तमिति बोद्धव्यम्।

बहोः कालात् पूर्वं कविकुलचूडामणिना कालिदासेन महाराजस्य दिलीपस्य सुशासनं वर्णयतोक्तम्—'व्यावृत्ता यत् परस्वेभ्यः श्रुतौ तस्करता स्थिता।' इति, सार्द्धसहस्रवत्सरत ऊर्द्ध्वमिदानीं T. P. Partington F. I. C., F. R. E. S. महोदयेन, Health and Strength ( स्वास्थ्यं च शक्तिश्च ) पत्रे विलिखितम्—आङ्गलभूमौ कुमारीत्वं शब्दमात्रे व्यवस्थितमिति। लण्डनपुरतः प्रकाशिते विश्रुततरे John Bull पत्रेऽपि दृश्यते—न खलु व्यतिक्रामत्येकोऽपि तथाविधः संवत्सरो यस्मिञ्छतशस्त्रयोदशवर्षीया अपरिणीता बालाः सुतान् न सुवते। H. G. Wells महोदयेनाप्युक्तम्—विवाहं विनिष्कास्यानियन्त्रितसम्भोगस्य साम्राज्यमस्माभिः प्रतिष्ठापितमिति। फरासीवैज्ञानिकप्रवरेण Dr. Paul Ballard महोदयेनापि 'काले विवाह एव भ्रूणहत्यानूढागर्भादीनामेकः प्रतिषेधक' इति स्वमतं प्रकटीकृतम्। केनचिदाङ्गलेन धर्मगुरुणाप्युक्तम्—जननिवारणयन्त्राणि बाहुल्येनानूढैरनूढाभिश्चोपयुज्यन्त' इति। ब्रिटिश-जननिवारणसंस्थाया नेत्र्या मार्गारेट्साङ्गारमहोदयानां मतेनामेरिकादिप्रदेशेषु प्रतिदिनमेवोपचीयमानस्य विवाहविच्छेदस्य भेषजं बाल्योद्वाह एव।

यथा रावणेनोक्तं—

जानामि सीता जनकप्रसुता जानामि रामो मधुसूदनश्च।
अहञ्च जानामि नरस्य वध्यस्तथापि सीतां न परित्यजामि॥

इति, मा खलु तथा वोचन्नस्मद्देशीया इति प्रार्थ्यते।

* वस्तुतस्तु Maiden hythe ( निरापन्नौकाशयः ) इत्येवास्य प्रवृत्तिनिमित्तम्।

# प्रशान्तरत्नाकरम्

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

( पूर्वानुवृत्तम् )

रत्ना—ज्ञायते, अस्त्यस्य राज्यस्य सीमान्ते दुर्गेश्वरेण सिंहवर्मणा समधिष्ठितं शैलदुर्गम् ?

वीर—अस्ति ज्ञायते, किं तेन ?

रत्ना—स एव दुर्गेश्वरो राज्ञे कामेश्वराय लिखति ।

वीर—किमिति ?

रत्ना—इदं लिखति,—स्वस्ति निखिलराजन्यगुणालङ्कृताय परम-भट्टारकाय कामेश्वराय, सीमान्तदुर्गाधिकृतः प्रणतः सिंहवर्मा श्रीमत्पादपीठोल्लुठितशीर्षः प्राप्तकालं निवेदयति—अस्माकं भूम्यनन्तरः शत्रुः शैलराजः प्रभूतबलवाहनः सम्प्रति दुर्गमत्रत्यमाक्रमितुमीहते । अपर्याप्तानि किलात्रत्यानि बलानि वाहनानि च तत्प्रतिरोधाय । तदेतच्छ्रुत्वा देवः प्रमाणम्, इति ।

वीर—पत्रमिदमासाद्य किं प्रतिपन्नं कामेश्वरेण ?

रत्ना—यदभिसन्धाय प्रयुक्तमस्त्रं तथैव प्रतिपन्नं तेनापि !

वीर—कथमिव

रत्ना—पत्रार्थमवगत्यैव राजा अमात्यैः साकं मन्त्रयित्वा प्रायेण सर्वानेव सैनिकान् शस्त्रग्राहिणस्त्वरितमेव तस्मिन्नन्त्यपालदुर्गे सम्प्रेषितवान् । केवलं पुररक्षणोपयुक्ताः कतिचिदेव राजप्रासादमधितिष्ठन्ति ।

विशालाक्षः—स्वामिन्, एवं स्थिते सर्वमेव पुरं सम्भ्रान्तं वर्तते, तेन च अप्राप्तसुप्तिके राजपुरे कथमिव नः समीहितसिद्धिः ?

रत्ना—विशालाक्ष, रत्नाकरमद्यापि न जानीषे, येनैवमाशङ्कसे । किं वा कतिपयैर्जागरितैः, ये कथमपि सुप्तास्तानपि स्वेच्छया जागरयिष्यामि ।

सर्वे—कथमिव ?

रत्ना—काले सर्वं द्रक्ष्यथ, इदानीं यथादिष्टमनुतिष्ठत ।

सर्वे—आदिशतु स्वामी ।

रत्ना—शूरसेन, अपि सन्निहितानि मदादिष्टानि सर्वाण्युपकरणानि ?

शूरसेनः—अथकिम्, एषा स्थूलरज्जुः, एतदरणिकाष्ठम्, इदं महादात्रम्, एताश्च गोणिकाः । अपि शिष्यते किञ्चिदपरम् ?

रत्ना—न शिष्यत इति प्रतिभाति ।

वीरबलः—वयस्य, दिशेदानीं कृत्यम् ।

रत्ना—वयस्य, वीरबल, एतत्प्राकाराभ्यन्तरे राजगृहस्यानतिदूरे सन्त्यमात्यानां गृहाः, तत्र केचित्तृणमयाः सन्ति, प्राकारमतिक्रम्य तत्र त्वया निपुणमग्निः प्रक्षेप्तव्यः, तेन प्रक्षिप्तेन वह्निना यावद् गृहाः प्रज्वलिष्यन्ति, तावदेव प्रज्वलितान्यतिसन्निहितानि भवनानि रक्षितुकामाः सर्वे तां दिशं प्रति प्रस्थास्यन्ते, तदैव शून्यप्राये राजप्रासादे सुतरामस्माकं कामचारो भविष्यति । तदलं विलम्बेन, यावत् प्राकारसमीपं गत्वा सत्वरं कृत्यमारभयामः ।

सर्वे—अहो, स्वामिनः साहसं निपुणदर्शिता च ।

वीर—यथादिशति प्रियवयस्यः ।

रत्ना—वीरबल, त्वं, मेघवर्णः, शूरसेनो, भीमबाहुः, विशालाक्षश्चेति पञ्चभिरेवाहमनुगन्तव्यः । अहं हि प्रथमतः—

प्राकारमुल्लङ्घ्य महाजवेन क्षणेन सम्प्राप्य पुरप्रवेशम् ।
बध्नामि रज्जुं तदुपान्तवृक्षे यत्संश्रयाणां भवतां गतिः स्यात् ॥

अन्यच्च, ये किलास्मदीया अपरे तेऽपि प्राकाराद् बहिरस्मानपेक्षिष्यन्ते, यावद् वयं साहसकारिणो द्रव्याणि यथाकामं सञ्चित्य तेभ्यो दास्यामः । यदि कश्चित् सहसा दृष्टः प्रतिपक्षस्तदा सोऽयमकालहीनमविचारितं हन्तव्यः । सति च व्यसनोपनिपाते निरपेक्षमेव प्रस्थातव्यम् ।

सर्वे—यथादिशति स्वामी ।

रत्ना—तदलमत्र कालातिपातेन। यावच्छीघ्रं प्राकारोपान्तमेव समुपसर्पामः।

सर्वे—एवं कुर्मः।

रत्ना—अहो ! एषा वामतः शिवा धावति, दक्षिणतो मृगः प्रसर्पति, तद् नूनमयमारम्भो नः शुभाय सम्पत्स्यते।

सर्वे—जयति—( अर्द्धोक्ते )

रत्ना—धिक् शान्तम् ! अलमत्यावेगेन, मूकाः कर्म कुरुत।

सर्वे—तथा—( निष्क्रान्ताः सर्वे )।

( ततः प्रविशतो भीतभीताविव रक्षिपुरुषौ )

१मः—अरे महावीर, अद्य भीषणाभोगा तामसी रजनी घोरं वक्त्रं व्यादाय ग्रसितुमिव नः समुपसर्पति। सर्वतः सुप्ते जगति जागरितावावाम्। अहो कष्टं खलु दास्यं नाम। येन ईदृशेऽपि घोरान्धकारे जीवनसंशयं पश्यतोरपि आवयोरशक्या कृत्यनिवृत्तिः।

२यः—अरे, वज्रहस्त, तावदेवात्र बहुतरं यत, राज्ञा सीमान्तदुर्गे सम्प्रेष्य सद्य एव वयं न प्राणसंशयं प्रापिताः।

१मः—आ मूर्ख, एवं ब्रुवाणस्त्वं तत्त्वं नावगच्छसि।

२यः—कथमिव ?

१मः—यदा प्रतिपक्षा मानवास्तदा अन्तरालगतस्य तेभ्यः सम्भाव्यते मोक्षः, इह तु कामरूपो कामाचारी च भूतयोनिः प्रतिपक्ष इति नास्ति अन्तरालगतस्यापि ततो मोक्ष इति।

२यः—धिङ् मूर्ख, स्वस्य मूढतामजानन् परं मूर्खं ब्रवीषि !

१मः—कथमिव ?

२यः—अपि न जानासि रे, यदयं नाम्ना नोत्कीर्तनीय इति, तदनेन ते व्यवसितेन सुसन्निहितमनिष्टं पश्यामि।

१मः—कस्मादनिष्टमाशङ्कसे ?

२यः—तस्मात् !

१मः—तस्मात् कस्मात् ?

२यः—यस्तावदन्धकारमुपजीवति ।

१मः—स कः ? स्पष्टं कथय ।

२यः—स भू—( अर्द्धोक्ते ) नहि नहि न पुनरहमपि तं नाम्नैव कीर्तयिष्यामि ।

१मः—किं नामकीर्तनेन ? अप्यसौ नामकीर्तनमात्रेणेव सन्निहितो भविष्यति ?

२यः—आ मूर्ख, अथ किम् । यदि न प्रत्येषि श्रूयतामितिहासः ।

१मः—कथय ।

२यः—कदाचिद् द्वौ सुहृदौ कार्यवशादमानिशायां ग्रामान्तरगमनाय घोरान्धकारप्रावृतं काननमार्गं परिप्राप्तौ ।

१मः—ततस्ततः ?

२यः—ततस्तयोरेकतरेण तदीयभयोद्विग्नेनापरः पृष्टः, भो मित्र, अप्यत्र कानने अस्ति ? अपरेणोक्तं भो मित्र, कस्य सत्तां पृच्छसि ? तेनोक्तं तस्य इति। ततोऽपि पुनः पुनरसौ तेन मित्रेण विशेषं पृष्टो यावदमुं नाम्ना कीर्तितवान्, तावदेव तत्र समीपे वर्तमानस्य महान्यग्रोधस्य शाखाग्रात् तालविशालौ चरणौ दृष्टिपथं प्राप्तौ ।

१मः—भो महावीर, प्राकारं निकषा दृष्टिं देहि, तत्र किमपि दृश्यत इव ।

२यः—अरे, अन्धकारेण दृष्टि प्रतिहन्यते, तत् स्पष्टं कथय यत् पश्यसि ।

१मः—अरे, प्राकारसन्निहिते पादपे दृष्टिं देहि ।

२यः—हा हा हा हा वज्रहस्त, समीपमेहि. एष एव नूनं सः, प्राकाराद् वृक्षं, वृक्षाच्च भूमिम् अवतरति । हा हा हा अतःपरं भूमिमार्गेण समागत्य आवयोर्घाटां मोटयिष्यति । आ ! आ !! आ !!! आ !!!!

१मः—अरे, मूर्ख मा तावदुच्चैः शब्दं कुरु, एवमसौ प्रबोधितः सत्वरमित एवाभिवर्तेत। तदेहि यावत् सत्वरं राजकुलं प्रविशावः।

२यः—( दृष्ट्वा ) अरे वज्रहस्त, आदौ एक एव, इदानीं पुनः पादपस्याधस्ताद् बहवो दृश्यन्ते ! हा हा, हताः स्मः।

१मः—आम् एवमिदम् ! अरे, न खलु अतः परमपि अत्र स्थातव्यम्। एहि एहि शीघ्रमेहि यावत् पलायावहे।

( ततः पुनः प्रविशन्ति रत्नाकरप्रमुखाः पञ्च पुरुषाः )

रत्ना—भो भो वीराः ! निर्विघ्नं वयं प्राकारमतिक्रान्ताः स्मः। अथेदानीं समीहितसाधनावसरः। क नु खलु शूरसेनः ?

शूरसेनः—स्वामिन्, एषोऽस्मि, आज्ञापय।

रत्ना—अपि सन्निहितमरणिकाष्ठम् ?

शूरसेनः—स्वामिन्, अथ किम्।

रत्ना—वीरबल, शूरसेनादरणिकाष्ठं गृहीत्वा स्वनियोगं सम्पादयस्व। एता दृश्यन्ते नातिदूरे अमात्यगृहश्रेणयः, तत्र ये तृणमया गृहास्तेषु अरणिनिर्मन्थनेन वह्निमुत्पाद्य सत्वरं संयोजय। सुप्ता सर्वैव पुरी, तदयमेव साधीयान् कालः स्वाभीष्टमस्माकं सम्पादयितुम्।

वीरबल—( शूरसेनादरणिकाष्ठं गृहीत्वा ) यथादिशाति वयस्यः, एष समीहितसाधनाय गच्छामि ( निष्क्रान्तः )।

रत्ना—बाढं गच्छ, अस्तु ते सफलः समारम्भः। मेघवर्ण, शूरसेन, विशालाक्ष, भीमबाहो, यूयमपि सन्नद्धा भवत, यावदेव वीरबलेन अमात्यगृहश्रेण्यां वह्निः संयोजितो भविष्यति, तावदेव प्रज्वलिताममात्यगृहश्रेणीं रक्षितुकामाः प्रासादवासिनः सर्वे तत्र गमिष्यन्ति, तदानीं कोषरक्षका अपि नूनं सत्वराः कोषगृहमविचारितमुपेक्षमाणास्तत्रैव मिलिता भविष्यन्ति। ततस्तमेव शुभावसरमासाद्य वयं कोषगृहं प्रविश्य स्वाभिलषितं सम्पादयिष्यामः।

सर्वे—आं ! गृहीतोऽर्थः।

रत्ना—भद्र शूरसेन, अपि गृहीतो वीरबलेन दण्डः ?

शूरसेनः—अथ किम्, गृहीतः ।

रत्ना—भवतु वीरबलस्य कृत्यं प्रतिपालयामः । ( नेपथ्याभिमुखमवलोक्य ) अहो एष वीरबलः सावधानं गच्छति ! एष गच्छति ! एष गच्छति ! एष इतस्ततो निपुणं वीक्षते ! एष तृणगृहश्रेणीमुपगतः ! हा धिक् प्रमादः ! एष कश्चन रक्षिपुरुषः ! अये एष वीरबलो दृष्ट्वा उत्प्लुत्य दण्डेन तमभिहन्ति, अहो एकाघातेनैव मूर्च्छितः पतितः ! अये एष वीरबलः समुपेत्य समाप्तपरीक्षस्तं मृतं निश्चित्य पुनः प्रचलति । एष स्थितः, एषः अरणिं निर्मथ्य अग्निमुत्पादयति, आं जातोऽग्निः, अये पुनरितस्ततो निरूप्य तृणपटलकप्रान्ते दण्डाग्रेण अग्निं योजयति । एष वातसन्धुक्षितः समुद्दीप्यते वह्निः, एष शिखां विस्तारयति । एष इतस्ततो दृष्ट्वा प्रत्यावर्तते वीरबलः । साधु वीरबल, साधु, सिद्धप्रायं नः समीहितं पश्यामः ( नेपथ्ये कलकलः ) ।

मेघवर्णः—अहो, एते गृहपतयः प्रबुद्धा विदितमहाविपत्तयो बहिरुपेत्य समुच्चैः क्रोशन्ति, क्रमेणायं प्रवर्द्धते लोकसम्मर्दः ।

रत्ना—ही ही भोः ! एते प्रासादमधिवसन्तोऽपि सहसा पौरजनकोलाहलेन प्रबुद्धा निर्विचारमग्निज्वालासन्दर्शनपर्याकुलास्तमेवाग्निमभिधावन्ति । अहो मे कृत्यसाफल्यम् ! एष प्रासादाद् बहिरागच्छति सङ्कुलो जनसमाजः ! एष गच्छति ! एष गच्छति !! एष गच्छति !!! अथेदानीं स्त्रीखञ्जरुग्णादिमात्रप्रचारं राजकुलं सम्भाव्यते । भो वीराः ! अलमद्यापि कालक्षेपेण, एष एव नः समयो राजकुलं प्रविश्य कोषागारं दूषयितुम्, तदागच्छत, पक्षद्वारकेण राजकुलमेव प्रविशामः ।

सर्वे—यथाज्ञापयति स्वामी ( सर्वे प्रविशन्ति ) ।

रत्ना—( समीपे रक्षिणं दृष्ट्वा ) अये, अद्याप्यत्र सशस्त्रो रक्षी ? भवतु प्राप्तकालं प्रतिकारं करोमि । ( सहसा समुपसृत्य दण्डप्रहारेण

रक्षिणं पातयित्वा ) मूढ, अद्यापि उच्छ्वासं वहसि ? तद् गच्छ, यमेन स्मृतोऽसि। ( पुनरपि दण्डेन प्रहृत्य ) मूढ, म्रियस्व।

रक्षी—आ आ आ ( मरणमभिनयति )

रत्ना—निःशेषं मृतः ! भो वीराः ! अस्तं गतो विघ्नः। तत् प्रविशत, ( प्रविश्य ) अये इदमुद्घाटितकवाटमेव कोषागारम् ! अहो भाग्यम् !

गर्भो रत्नकरैर्भाति कोषागारस्य भास्वरः।

मेघवर्णः—स्वामिन्, अत्रापि रक्षी !

रत्ना—पूर्वस्यैवानुकारेण यमद्वारं गमिष्यति ॥

तदत्र अन्तराले क्षणं तिष्ठत, यावदहं निपुणमुपसृत्य समीहितं साधयामि (सावधानमुपसृत्य एकदण्डप्रहारेण पातयति)।

रक्षी—हा हतोऽस्मि (भूमिगतो विचेष्टते)

रत्ना—मूढ, अद्यापि न मृतोऽसि, (पुनः प्रहृत्य कण्ठं निष्पीड्य मारयति)।

रक्षी—आ आ अ अ—(अव्यक्तं शब्दं कुर्वन् निश्चेष्टतां नाटयति)।

रत्ना—(विशेषतः परीक्ष्य) गतं विघ्नेन। भो वीराः ! अलं कालक्षेपेण, इदं रत्नागारद्वारम् अत्र सत्वरं प्रविश्य

यावच्छक्यं रत्नराशिं गृहीत्वा
तेनोत्साहाद् गोणिकाः पूरयित्वा।
सर्वं विघ्नं शक्तियोगेन हित्वा
प्रत्यावृत्तिं वर्तयध्वं समेताः ॥

यावदहमपि समुद्यतेन दण्डेन निर्विघ्नतां वः साधयामि।

( समुद्यतदण्डो द्वारे तिष्ठति )

सर्वे—यथाज्ञापयति स्वामी। ( प्रविश्य ) स्वामिन्, रत्नानां किरणैः प्रतिहन्यन्ते नश्चक्षुषस्तेजांसि।

रत्ना—नायं कालः कथान्तरस्य, तत् स्वकृत्येष्ववहिता भवत।

सर्वे—तथा, ( प्रविश्य गोणिकासु रत्नानि स्थापयित्वा ) स्वामिन्, रत्नैः परिपूरिताः सर्वा एव गोणिकाः ।

रत्ना—समाप्तं कृत्यम्, अथेदानीं निर्गत्य मामनुसरत, अहं दण्डधारी भवतां सम्मुखचरो भ्रमामि ।

सर्वे—यथाज्ञापयति स्वामी ( निष्क्रान्ताः ) ।

( ततः प्रविशन्ति प्रज्वलितानि गृहाण्युदीक्षमाणाः सम्भ्रान्ताः पौराः )

१मः—भो भो बान्धवाः ! दग्धप्रायाणि क्षुद्रगृहाणि समुपेक्ष्य साम्प्रतमपि कथञ्चिद् ध्रियमाणानि विशालगृहाणि रक्षितुं प्रयत्नमातिष्ठत ।

२यः—भो भो रक्षणार्थमनन्तरं यत्नं करिष्यथ । आदौ तावद् निरूपयत, केनायमग्निः प्रदीपित इति ।

१मः—अहो विवेकलाघवम् ! आर्य बृहस्पते, आदौ अग्निप्रदीपकस्यान्वेषणे क्रियमाणे स्वयमेव दाह्याभावादग्निः प्रशाम्येत, न तु भवतां प्रयत्नलेशोऽपि तत्रापेक्ष्येत । तदादौ क्रियतामग्निनिर्वापणप्रयत्नः, किंवा अनर्थहेतुना आत्मनो विज्ञम्मन्यताया अकाण्डे प्रकटनेन ।

३यः—अहो ! अत्याहितम् ! एतदाक्रान्तमग्निना प्रवरामात्यस्य वाचस्पतेर्बहिर्गृहम् । तद् यावदस्यैव गृहं रक्षितुमादौ यत्नं कुर्मः ।

१मः—हा धिक् कष्टम् ! स्वल्पेनैव कालेन प्रबलवातसन्धुक्षितः प्रवर्द्धते प्रलयकारी ज्वलनः । तदिदमपि गृहं न शक्यं रक्षितुम् ! मुहुः सलिलसेकादिभिरुपायैः प्रतिक्रियमाणस्यापि प्रबलेन पराक्रमेण प्रज्वलतो ज्वलनस्य नैव शक्यते प्रभावः प्रतिरोद्धुम् । मा तावदयं वह्निः सहसा प्रसृतः प्रासादमाक्रामेत् ।

२यः—अरे, पश्यत, सर्वे गृहवासिनः सबालस्त्रीवृद्धा बहिः प्राप्ता न वा ?

( क्रमशः )

---

# बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः

[ निबन्धकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः शास्त्री एम. ए]

विदितमेवैतत् प्रायेण वाचकमहाभागानां यत् साम्प्रतिकेषु भारतीयेषु वृत्तान्तपत्रेषु "आनन्दबाजार"पत्रिकाया एव प्रचारः समधिक इति। पत्रिकायां चास्यामुद्भटसागर-पूर्णचन्द्र-दे-महोदयेन स्त्रीप्रत्ययमधिकृत्य किमपि पृष्टम्। मन्ये स्त्रीणामिव स्त्रीप्रत्ययानामपि सर्वथा दुर्विभावतया कलिकाताविश्व-विद्यालयतः प्रकाशिते व्याकरणे ग्रन्थान्त एव स्वल्पतया स्त्रीप्रत्ययानां सन्नि-वेशः प्रत्यक्षतामुपयाति। सिद्धान्तकौमुद्यां च स्त्रीलिङ्गशब्दानां विवेचनावसरे प्रथमत एव उपानह्-शब्दस्य सन्निवेशे किं वा बीजं को ब्रूयात्। कदाचित् केनापि वैज्ञानिकप्रवरेणाभिनवे संस्कृत-व्याकरणे सम्मार्जनीशलाकाप्रभृति-शब्दानामपि सन्निवेशो विधीयेत—को जानीयात्, कालो ह्ययं निरवधिर्विपुला च पृथ्वी। उद्भटसागरमहोदयेनोक्तम् "पिपासु-जिज्ञासु-दित्सु प्रभृतीना-मखिलानामुकारान्तानां शब्दानां कीदृशानि रूपाणि स्युः। तैस्तैर्वैयाकरणै-स्तानि तानि रूपाणि प्रदर्शितानि। किं बहुना एकस्यास्य प्रश्नस्य चतुर्विध-मुत्तरमधिगतम्" इति। नात्र किञ्चिदद्भुतमिव पश्यामः। स्मर्यतां ताव-च्छास्त्रकारवचनम्—

> परिव्राट्-कामुक-शुनामेकस्यां प्रमदातनौ।
> कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः॥

इति। अत्रापि रूपभेदे द्रष्टुर्दृष्टेर्विभेदे च वासनाभेद एव निदान-मित्यवबोद्धव्यम्। किञ्च,

> 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीजनस्य"

इत्यभियुक्तोक्त्यापि रमणीरूपस्य प्रतिमुहूर्तं विभिन्नत्वं संसिध्यति। परम् एतत् सर्वं प्रातिभासिकमित्यत्र नास्ति कोऽपि संशयावकाशः। प्रकृति-

विविक्तपुरुषसाक्षात्कारिणां वा समधिगतब्रह्मात्मैकत्वानां वा सर्वमेक-रूपमेव।

अस्यैव च महाशयस्य द्वितीयः प्रश्नः "छात्र-शिक्षक-सेवक-सभापतयः स्त्रियां कीदृशमाकारं परिगृह्णीयु"रिति।

---

# बङ्किमप्रशस्तिः

[ निबन्धकः—श्रीसुरेन्द्रमोहन-वेदान्तशास्त्री पञ्चतीर्थः ]

[ अयं शततमः संवतसरस्तत्रभवतो बङ्गसाहित्यार्णवकर्णधारस्य बङ्किम-चन्द्रचट्टोपाध्यायस्य जातस्य। इमं निमित्तीकृत्य प्रवर्तितास्तत्र तत्र तद्-लौकिकप्रतिभायाः प्रकाशमादधाना बङ्गभाषागुम्फिताः प्रबन्धाश्च वाग्मिताश्च। संस्कृतज्ञेष्वप्यस्य साहित्यप्रतिभा सबहुमानमादृतेति प्रकाश्यमाना निबन्धद्वयी नूनं प्रकाशयेत्। प. सः ]

वङ्गेषु नवया रीत्या बङ्किमेन विवर्द्धिता।
वङ्गभाषा-सुता याऽद्य मातृत्वं समुपागता ॥१॥
सा वङ्गजननी सम्यक् सेव्यते सेवकैः सुतैः।
स्मर्यते पालको ह्यस्याः सर्वत्र बङ्किमः सुधीः ॥२॥
ये द्विषन्ति सदा वङ्गान वङ्गभाषाञ्च मातरम्।
पाश्चात्त्या अपि ते सर्वे परमानन्दचेतसः ॥३॥
वङ्किमाविष्कृता वार्ता अनूद्य स्वस्वभाषया।
मण्डयन्ति प्रकामं तां प्रापयन्ति च गौरवम् ॥४॥
स्वधर्मचर्यार्पितजीवनस्य स्वदेशभक्त्युत्सुकमानसस्य।
अपूर्वसृष्टेः प्रभवस्य तस्य भूयाद् जयो विप्रकुलोद्भवस्य ॥५॥
ज्योत्स्ना-हासमयी हिमाद्रिमुकुटा स्निग्धा सरिन्मालिनी
रम्या काननकुन्तला मलयजामोदेन यामोदिता।

शस्यैः पक्कतमैः सुवर्णवसना स्वर्गादपि ज्यायसी
"वन्दे मातरम्" अद्य तां शिवमयीं तज्जन्मभूमिं मुदा ॥६॥
सुहृश्यः सज्जनादर्शः पण्डितः पण्डितप्रियः ।
प्रियो लक्ष्मीसरस्वत्योर्वैकुण्ठे माधवोपमः ॥७॥
आजानुलम्बितभुजो महापुरुषलक्षणः ।
आजन्म भारतीभक्तः शुकदेवो यथा पुरा ॥८॥
ततो गद्यमयीं वाणीं सेवमानो बुधाग्रणीः ।
साहित्यगगने भास्वान् विभाति भुवनेऽखिले ॥९॥
यस्य वार्तावहे पत्रे 'वङ्गदर्शन'नामनि ।
नामधेयं वरीवर्त्ति गीर्षु वाचस्पतेरिव ॥१०॥
विद्यावतां प्रसङ्गेषु लेखकानां कथासु च ।
उदाहरन्ति वक्तारो यस्य नाम पदे पदे ॥११॥
विपश्चित्कुलकुञ्जे यः सन्ततं कोकिलायते ।
वसन्तेन विना यस्य नास्ति कालान्तरं क्वचित् ॥१२॥
प्रियहितमितभाषी सौम्यवेशी सुहासी
विहितहितमिताशी सत्प्रबन्धप्रकाशी ।
सुजनहृदयवासी ज्ञानविज्ञानराशि-
श्चरमवयसि भूतः कर्मतः स्वर्गवासी ॥१३॥
आनन्दमठ-दुर्गेश-नन्दिनी-चन्द्रशेखराः ।
राजसिंह-रजन्यादि-सीताराम-विषद्रुमाः ॥१४ ॥
ग्रन्थास्ते तुलनाहीना नानाविषयचारिणः ।
श्रीकृष्णचरितं धर्मः कमलाकान्तदप्तरः ॥१५॥
इत्याद्याः शतशो ग्रन्था ज्योतिष्कप्रोज्ज्वला भुवि ।
वङ्गसाहित्य-खे नित्यं वीक्ष्यन्ते सादरं नृभिः ॥१६॥
मनोभावा भान्ति प्रतिफलितवद् यस्य कृतिषु
प्रबन्धग्रन्थेषु प्रतिपदमुदारं मुकुरवत् ।

तथा ह्यालोक्यन्ते शुचिमतिभिरद्यापि ननु ते
पठद्भिस्तान् ग्रन्थांश्चिरमपि गतस्यामरपुरम् ॥१७॥
नानोदन्तान पुरजनपदान भिन्नधर्मान स देशान
दर्शं दर्शं विविधचरितान भूरिभाषांश्च लोकान्।
भूयोदृष्टिप्रभवमचिनोज्ज्ञ ज्ञानरत्नं महद् यद्
धीनिष्णातास्तदनुमिमतेऽद्यापि तत् पुस्तकेभ्यः ॥१८॥

---

## श्रीबङ्किमचन्द्रचट्टोपाध्यायः

[ निबन्धकः—के. ए. रामलिङ्ग-शास्त्री ]

श्रीमान बङ्किमचन्द्रचट्टोपाध्यायमहाकविः किल चतुर्विंशतिबर्गणान्तर्गते श्रीकण्ठपुराग्रहारे पावने भूसुरवंशेऽष्टात्रिंशदुपस्कृताष्टादशशततमे (१८३८) क्रैस्तवाब्दे जूनमासे सप्तविंशे दिवसे समजनि। 'प्रवर्त्स्यमानं सस्यं हि ज्ञायतेऽङ्कुरसंस्थितौ' इति द्राविडाभाणकानुसारेण शैशव एव धिषणा-तैक्ष्ण्य-विद्यौत्सुक्य-धर्मचिन्तादिसद्गुणचिह्नानामसौ कुलभवनमभात्। आदितोऽग्रहारपाठशालायाम्, ततो मदनपुरोत्तरविद्याशालायां चैतस्मिन्नधीयाने चकाशिरेऽमूनि चिह्नानि। अनन्तरं हूग्लि-महाकलाशालायामधीत्य कियन्तं-चनानेहसं, समुचितेन पारितोषिकेण समं षट्पञ्चाशदुत्तरसिताष्टादशशततमे हायने (१८५६) कलिकाता-राजधानीकलाशालायां सममिलत्; तत्रा-मुष्मिन्नधीयाने, अध्यापकास्तत्रत्याः समीक्ष्यैतदीयं बोधितविषयग्रहणनैपुण्या-दिकं विसिष्मियिरे। अथो नूत्नतया प्रतिष्ठिते कलिकाता-विश्वविद्यालये बी. ए, परीक्षामुदतरत् प्राथम्येन। अदसीयविद्वत्तया विस्मिता अनुशासिता-रश्च एनं प्रारम्भ एव सहकारि-दण्डाधिकरणिकपदे न्ययूयुजन। ईदृशाधि-करणनिर्वहणधोरण्या प्रीणिताः प्रशास्तारः प्रतिष्ठामेतदीयामुच्चैस्तरां प्राप-यन्तः, अन्ततः सहकारिकार्यदर्शिनमेनं वङ्गाधिकृतानां न्ययुञ्जत।

किं तु, आत्मनः स्वभावानतुगुणं स्थानमेनदेष बहुतिथं नावहत। पुनरपि पञ्चाशीत्यवतंसिताष्टादशशततमे वत्सरे (१८८५) प्रथमकक्ष्यार्हे दण्डाधिकरणिकपदेऽभ्यषिच्यत। ततः कतिपयसंवत्सरानन्तरं (१८९१) एकनवतिवतंसिताष्टादशशततमशरदि विरामवेतनं (Pension) स्वीकृत्य राजकीयाधिकाराद् विरराम। यदाऽयम् आधिकारिकोऽभूत् तदा प्रजानां सर्वासामपि हितमतिमहदतानीत्। रमणीयशैल्या आंग्ल्या विलेखने विख्यातोऽयम्; अत्युदार-प्रकृतिना आदर्शभूतेन इन्दिराकटाक्षलक्ष्येण, ईशाणिमैश्वर्यविवर्तकल्पेन, उत्तमोत्तमास्पद (Post) निर्वहण-धुरन्धरेण, ऊर्जस्वल-सरल-रसाल-फल-हृद्य-गद्य-रचनातुलितवाल्मीकिना, नानाभाषा-विशारदेनापि वङ्गाली-भाषाजीवातुना 'आनन्द-मठ'-'चन्द्रशेखर'-'कपाल-कुण्डला'-'कृष्ण-कान्त-निर्वाण-पत्र' ( Will ) प्रभृतिभिः शताधिकैः प्रकरणैः ( Novels ) सकलदेशीयजनहितबोधकैर्लब्धकीर्तिपताकेन यशःकायेन जीवता अमुना कविपुङ्गवेन भारतवर्षीयाः सर्वेऽपि महतीं समुन्नतिम् आरोपिताः। परमानन्दतुन्दिलचित्ताः स्मः स्मारंस्मारं महापुरुषमेनम्॥

# स्त्रीधर्मः

(पूर्वानुवृत्तः)

[ निबन्धकः—श्रीगोपालकृष्णवेदान्ताचार्यः एम्. ए ]

शोधयित्वा तु पात्राणि पूरयित्वा तु धारयेत् । महानसस्य पात्राणि बहिः प्रक्षाल्य सर्वदा । मृद्भिश्च शोधयेच्चूल्लीं तत्राग्निं विन्यसेत् ततः । स्मृत्वा नियोगपात्राणि रसांश्च द्रविणानि च । कृतपूर्वाह्णकार्या च स्वगुरूनभिवादयेत् । ताभ्यां भर्तृपितृभ्यां वा भ्रातृमातुलबान्धवैः । वस्त्रालङ्काररत्नानि प्रदत्तान्येव धारयेत् । मनोवाक्कर्मभिः शुद्धा पतिदेशानुवर्तिनी । छायेवानुगता स्वच्छा सखीव हितकर्मसु । दासीवाऽऽदिष्टकार्येषु भार्या भर्तुः सदा भवेत् । ततोऽन्नसाधनं कृत्वा पतये विनिवेद्य तत् । वैश्वदेवकृतैरन्नैर्भोजनीयांश्च भोजयेत् । पतिञ्चैतदनुज्ञाता शिष्टमन्नाद्यमात्मना । भुक्त्वा नयेदहःशेषमायव्ययविचिन्तया । पुनः सायं पुनः प्रातर्गृहशुद्धिं विधाय च । कृतान्नसाधना साध्वी सुभृशं भोजयेत् पतिम् ॥ नातितृप्ता स्वयं भुक्त्वा गृहनीतिं विधाय च । आस्तीर्य साधु शयनं ततः परिचरेत् पतिम् ॥ सुप्ते पत्यौ तदभ्यासे स्वपेत् तद्गतमानसा । अनग्ना चाप्रमत्ता च निष्कामा च जितेन्द्रिया । नोच्चैर्वदेन्न परुषं न बहून् पत्युरप्रियम् । न केनचिद् विवदेच्च अप्रलापविलापिनी । न चातिव्ययशीला स्यान्न धर्मार्थविरोधिनी । प्रमादोन्मादरोषेर्ष्यावञ्चनञ्चातिमानिताम् । पैशुन्य-हिंसा-विद्वेष-महाहङ्कार-धूर्तताः । नास्तिक्य-साहस-स्तेय-दम्भान् साध्वी विवर्जयेत् । एवं परिचरन्ती सा पतिं परमदैवतम् । यशः स्वमिह यात्येव परत्र च सलोकतामिति ।

अथासां नैमित्तिककर्माण्याह यथा—"योषितो नित्यकर्मोक्तं नैमित्तिकमथोच्यते । रजोदर्शनतो दोषात् सर्वमेव परित्यजेत् । सर्वैरलक्षिता

शीघ्रं लज्जिताऽन्तर्गृहे वसेत्। एकाम्बरावृता दीना स्नानालङ्कारवर्जिता। मौनिन्यधोमुखी चक्षुः-पाणि-पद्भिरचञ्चला। अश्नीयात् केवलं भक्तं नक्तं मृन्मयभाजने। स्वपेद् भूमावप्रमत्ता क्षपेदेवमहस्त्रयम्। स्नायीत च त्रिरात्रान्ते सचेलमुदिते रवौ। विलोक्य भर्त्तुर्वदनं शुद्धा भवति धर्मतः। कृतशौचा पुनः कर्म पूर्ववच्च समाचरेदिति।

अथ क्रमप्राप्तो विधवाधर्मो विविच्यते। तथाच विष्णुः "मृते भर्त्तरि ब्रह्मचर्यं तदन्वारोहनं वा" इत्यनेन मृतभर्त्तृकायाः पक्षद्वयं विहितवान्। अत्र ब्रह्मचर्यस्य स्त्रीसाधारणविषयत्वात् अन्वारोहणस्य च वर्णावस्थादिना सापेक्षत्वात् प्रागन्वारोहणं विचार्यते। तच्चान्वारोहणं द्विविधं सहमरणमनुमरणञ्च। तत्र भर्त्रा सहैकचितायां समारोहणं पृथक्चितायां चेत्यनयोर्भेदः। अन्वारोहणमुद्दिश्याह दक्षो यथा "मृते भर्त्तरि या नारी समारोहेद्धुताशनम्। सा भवेत्तु शुभाचारा स्वर्गलोके महीयते॥ व्यालग्राही यथा व्यालं बलादुद्धरते विलात्। तथा सा पतिमुद्धृत्य तेनैव सह मोदते॥" इति। पराशरोऽप्याह यथा "तिस्रः कोट्योऽर्द्धकोटी च यानि रोमाणि मानवे। तावत्कालं वसेत् स्वर्गं भर्त्तारं याऽनुगच्छति॥ व्यालग्राही यथा व्यालं बलादुद्धरते विलात्। एवमुद्धृत्य भर्त्तारं तेनैव सह मोदते॥" इति। वृद्धहारीतोऽप्याह यथा "या स्त्री मृतं परिष्वज्य दग्धा चेद्धव्यवाहने। सा भर्त्तृलोकमाप्नोति हरिणा कमेला यथे"ति। भर्त्तृमरणे रजस्वलाया अप्यनुमरणमभिप्रेत्याह वृद्धहारीतो यथा "मृते भर्त्तरि या नारी भवेद् यदि रजस्वला। चिताग्निं संग्रहेत् तावत् स्नात्वा तस्मिन् प्रवेशयेदि"ति। यावत् सा नारी ऋतुस्नानं कृत्वा तस्मिन् चिताग्नावात्मानं प्रवेशयेत् तावत् तं चिताग्निं रक्षेदित्यर्थः। अत्र विशेषमाह व्यासो यथा "दिनैकगम्यदेशस्था साध्वी चेत् कृतनिश्चया। न दहेत् स्वामिनं तस्या यावदागमनं भवेदि"ति। अनुमरणमुद्दिश्याह ब्रह्मपुराणं यथा "देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयम्। निधायोरसि संशुद्धा प्रविशेज्जातवेदसम्। ऋग्वेदवादात् साध्वी स्त्री न भवेदात्मघातिनी"ति। पुराणान्तरे च यथा "दयितं याऽन्यदेशस्थं मृतं श्रुत्वा पतिव्रता।

समारोहेत दीप्तेऽग्नौ तस्याः शक्तिं निबोधत। यदि प्रविष्टो नरकं बद्धः पाशैः सुदारुणैः। तिष्ठते विवशो दीनो वेष्ट्यमानः स्वकर्मभिः॥ व्यालग्राही यथा व्यालं बिलादुद्धरते बलात्। तद्वद् भर्त्तारमादाय तेनैव सह मोदते॥ तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः। क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दशे"ति। पतिव्रतालक्षणमाह वृद्धहारीतो यथा "आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिनाम्बरा। मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता" इति। गर्भिण्याः सहमरणमनुमरणञ्च निषेधति वृद्धहारीतो यथा "गर्भिणी नानुगच्छेत तु मृतं भर्त्तारमव्ययम्। ब्रह्मचर्यव्रतं कुर्याद् यावज्जीवमतन्द्रिते"ति। संग्रहान्तरे च यथा "बालसंवर्द्धनं त्यक्त्वा बालापत्या न गच्छति। रजस्वला सूतिका च रक्षेद् गर्भञ्च गर्भिणी"ति। ननु "मृते भर्तरि या नारी भवेद् यदि रजस्वला" इत्यादि वचनेन रजस्वलाया अपि ऋतुस्नानानन्तरं संगृहीतभर्तृचितानावारोहणमुक्तम्। बालसंवर्द्धनं त्यक्त्वेत्यादि वचनेन च तस्या अन्वारोहणं निषिद्धमित्यनयोर्विरोध इति चेत् भर्त्तुश्चिताग्निरक्षणासम्भव एव रजस्वलाया अनुमरणनिषेध इत्यविरोधः। महापातकिनमपि पतिं त्रायतेऽनुमृता पत्नीत्याह वृद्धहारीतो यथा "ब्रह्मघ्नं वा सुरापं वा कृतघ्नमपि मानवम्। यमादाय मृता नारी तं भर्त्तारं पुनाति ही"ति। निबन्धान्तरे त्वनुगन्त्र्यास्त्रिकुलोद्धारणमप्युक्तं यथा "मातृकं पैतृकञ्चापि यत्र चैव प्रदीयते। पुनाति त्रिकुलं नारी भर्त्तारं याऽनुगच्छती"ति। ब्राह्मण्याः अनुगमनं निषेधति पैठिनसिर्यथा "मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात्। इतरेषान्तु वर्णानां स्त्रीधर्मोऽयं परः स्मृतः" इति। अङ्गिरा अपि "या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत्। सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेदि"ति। ननु व्यासेन संहितायां ब्राह्मणीनामप्यनुगमनं विहितं यथा "मृतं भर्त्तारमादाय ब्राह्मणी वह्निमाविशेत्। जीवन्ती चेत् त्यक्तकेशा तपसा शोधयेद् वपु"रिति। ततश्च पैठिनस्यादिभिरस्य विरोध इति चेत् अत्रैतन्मन्तव्यम्—ब्राह्मणीनां यदन्वारोहणविधानं तत् सहमरणविषयकमेव, निषेधस्त्वनुमरणे। तथा चोशना "पृथक्चितिं

समारुह्य न विप्रा गन्तुमर्हति। अन्यासाञ्चैव नारीणामयं धर्मः परः स्मृतः” इति। अत एव व्यासवचने आदायेति पदप्रयोगः। पुनात्याविधवा नारी तथादाय मृता तु या इति लिखितवचनेऽपि आदायेति पदप्रयोगः। अन्वारोहणस्य पक्षान्तरमाहतुर्मनुपराशरौ यथा—“मृते भर्तरि या नारी ब्रह्मचर्ये व्यवस्थिता। सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिण” इति। अस्या धर्माचारावाह वृद्धहारीतो यथा “ब्रह्मचर्यव्रतं कुर्याद् यावज्जीवमतन्द्रिता।” विधवा नारीति शेषः। तत्स्वरूपमाह स एवयथा “केशरञ्जनताम्बूलगन्धपुष्पादिसेवनम्। भूषणं रङ्गवस्त्रञ्च कांस्यपात्रेषु भोजनम्। द्विवारभोजनं चाक्ष्णोरञ्जनं वर्जयेत् सदा। स्नात्वा शुक्लाम्बरधरा जितक्रोधा जितेन्द्रिया। न कल्ककुहका साध्वी तन्द्रालस्यविवर्जिता। सुनिर्मला शुभाचारा नित्यं संपूजयेद्धरिम्। क्षितिशय्या भवेद्रात्रौ शुचौ देशे कुशोत्तरे। ध्यानयोगपरा नित्यं सतां सङ्गे व्यवस्थिता। तपश्चरणसंयुक्ता यावज्जीवं समाचरेत्॥ तावत्तिष्ठेन्निराहारा भवेद् यदि रजस्वला। एवं सुनियताहारा सम्यग् व्रतपरायणा॥ भर्त्रा सह समाप्नोति वैकुण्ठपदमव्ययम्॥” इति। कल्ककुहका चन्दनानुलेपनादिष्वभ्यस्ता न भवेदित्यर्थः। हरिमिति स्वोपास्यपरम्। मनुराह यथा “आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी। यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तममि”ति। न च “देवराद्वा सपिण्डाद् वा स्त्रिया सम्यङ् नियुक्तया। प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये॥” इति मनुवचनात्, तथा अत ऊर्द्ध्वं गुरुभिरनुमता देवराज्जनयेत् पुत्रमपुत्रेति बौधायनसूत्राच्च विधवायाः पुत्रजननविधानात् कथं तस्या ब्रह्मचर्यविधिः सम्भवतीति वाच्यम् अपुत्रा चेत् स्वामिना मरणात् पूर्वं पुत्रोत्पादनायानुमता स्यात् तदा सा केवलमेकमेव पुत्रमुत्पादयितुमधिकारिणी स्यात्। तथा चाह मनुः विधवायां नियुक्तस्तु घृताक्तो वाग्यतो तथाचाह मनुः विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि। एकमुत्पादयेत् पुत्रं न द्वितीयं कथञ्चने”ति। तेन यथा “निन्द्यास्वष्टासु चान्यासु स्त्रियो रात्रिषु वर्जयन्। ब्रह्मचार्येव भवति यत्र तत्राश्रमे वसन्नि”त्यादि मनु-

वचनेन गृहस्थो वैधगमनेन ब्रह्मचर्यान्न हीयते एवं स्वामिनानुज्ञाता स्त्र्यपि वैधसन्तानोत्पादनेन ब्रह्मचारिण्येवावतिष्ठते। पुत्रे जाते यदि पुनस्तौ कामतः सङ्गतौ स्याताम् तदोभावेव पतितौ स्त इति मनुराह यथा "विधवायां नियोगार्थे निर्वृत्ते तु यथाविधि। गुरुवच्च स्नुषावच्च वर्तेयातां परस्परम्। नियुक्तौ यौ विधिं हित्वा वर्तेयातान्तु कामतः। तावुभौ पतितौ स्याताम् स्नुषाग-गुरुतल्पगावि"ति। भर्त्राऽन्येन देवरादिना पुत्रोत्पादनायाननुज्ञापितानां स्त्रीणां पुत्रहीनानामपि स्वर्गो भवत्येवेत्याहतुर्मनुविष्णू यथा "मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता। स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिण" इति। स्त्रीणामवैधपुत्रोत्पादने दोषमप्याह मनुर्यथा "अपत्य-लोभाद् यातु स्त्री भर्तारमतिवर्तते। सेह निन्दामवाप्नोति पतिलोकाच्च हीयत" इति। कलौ तु पुनः क्षेत्रजपुत्रोत्पादनविधानाभाव एव सुव्यवस्थितस्तथाच पारस्करगृह्यसूत्रभाष्ये गदाधरधृतं पराशरवचनं "यज्ञाधानं गवालम्भः सन्न्यासः पलपैत्रिकम्। देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेदि"ति। पुराणेऽपि देवराच्च सुतोत्पत्तिरित्यादिना सा निषिद्धेति शेषः। ननु नष्टे-मृते प्रव्रजिते क्लीवे च पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयत" इत्यनेन पराशरेण नार्याः पञ्चस्वापत्सु विवाहान्तरविधानेन पक्षान्तरस्थापनात् कथमुक्तं पक्षद्वयमिति चेत्, अत्रोच्यते पतिशब्दस्यात्र पालनार्थकत्वान्न पक्षान्तरविधानम्। तथाहि यदि स्त्रियाऽभर्तृकुले पितृकुले

( क्रमशः )

## कालिदासीयं यशोवर्णनम्

[ निबन्धकः—के. ए. रामलिङ्गशास्त्री ]

कवियशःप्रार्थी किल कालिदासः—आत्मानं मन्दं च महाकवीनाम् उपहासास्पदं च आकलयन्, ततश्च स्वकीयम् औद्धत्यं परिहरन्, 'यशसे विजिगीषूणाम् अन्वयं रघूणामहं तनुवाग्विभवोऽपि सन् वक्ष्ये' इति प्रतिज्ञाय, दिलीपमहाराजवर्णने प्रवृत्तः

'न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत् परस्वेभ्यः श्रुतौ तस्करता स्थिता' ॥१।२७॥

इति सुवचनेन अयोध्यायां नगरीरक्षकाणां योधानाम् अवधानात्, प्रजानां सत्त्वोद्रेकात् तस्करादिग्रन्थिचोराभावात्, चौर्यमेव चोरितम् इति अपरिमितम् अस्य सरसं वर्णयति। विधातारम् अभ्यर्च्य प्रयतौ सुदक्षिणा-दिलीपौ पुत्र-काम्यया प्रस्थितौ इति वर्णयन्

'स दुष्प्राप-यशाः प्रापदाश्रमं श्रान्त-वाहनः ।
सायं संयमिनस्तस्य महर्षेर्महिषी-सखः' ॥१।४८॥

इति सूक्त्या, प्राप्याश्रमं गुरोर्दिव्यज्ञानाद् उपदिष्टपुत्रप्रतिबन्धनिवर्तक-कामधेनु-वरिवस्या-रहस्यः, 'गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश' इति मन्वानः, तन्वानः प्रिय-वचनानि

'अथ प्रजानाम् अधिपः प्रभाते जाया-प्रतिग्राहितगन्धमाल्याम् ।
वनाय पीत-प्रतिबद्ध-वत्सां यशो-धनो धेनुमृषेर्मुमोच ॥२॥'
'कुसुम-सधर्माणो हि योषितः'......इति देवी-परिखेदनासहनः प्रभुः,—
'निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूत-चतुःसमुद्रां जुगोप गोरूप-धरामिवोर्वीम् ॥३॥'
'सङ्गीतार्थो ननु नरपतेरत्र भावी समग्रः' इति सङ्गीत-द्वारा—
'स कीचकैर्मारुत-पूर्ण-रन्ध्रैः कूजद्भिरापादित-वंश-कृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वन-देवताभिः ॥१२॥'

इत्यादिसूक्तचतुष्टये निर्दिष्टैः, 'दुष्प्रापयशाः,' 'यशोधनः,' 'सुरभि-र्यशोभिः' इति विशेषणत्रितयेन, स्वाभाविक-वन्य-वंशवाद्य-साह्यपूर्वकं वन-देवताभिः तार-तरेण स्वरेण उद्गीयमान-'जयोदाहरण'-स्वीय-यशःसङ्गीत-ध्वनिभिः आह्लाद्यमान-मानसः, मानस-सरः-शरदिन्दु-कुन्द-नीहार-हार-मृणाल-मराल-सुरगज-नीर-क्षीर-घनसार-गिरिशाट्टहास-कैलास-काश-नीकाश-मूर्त्या कीर्त्या सर्वतः सुरभीकृतः

'पृक्तस्तुषारैर्गिरि निर्झराणाम् अनोकहाकम्पित-पुष्प-गन्धी ।
तमातपक्लान्तमनातपत्रमाचार-पूतं पवनः सिषेवे ॥२३॥'

इति सुभाषितेन, शैत्य-सौरभ्य-मान्द्य-मनोहरेण पावनेन पवनेन आसेव्यमानः

'स्थितः स्थिताम् उच्चलितः प्रयातां निषेदुषीमासन-बन्ध-धीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥६॥'
'तामन्तिक-न्यस्तबलि-प्रदीपाम् अन्वास्य गोप्ता गृहिणी-सहायः ।
क्रमेण सुप्तामनु-संविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत ॥२४॥

इत्थं महनीय-कीर्तिर्महीपतिः पल्लव-रागताम्रां नन्दिनीम् अनुचरन्, प्रत्यूषे च प्रदोषे च आश्रम-पदाद् वनान्तरं, वनान्तराच्चाश्रम-पदं प्रति गतागतानि कुर्वन् एकविंशतिं दिनानि निनाय। अन्येद्युः किल कल्य एव हैमवत्याम् अरण्यान्यां शाद्वले घास-ग्रासान् घासन्तीं नन्दिनीम् अद्रिशोभा-वर्जितचित्तो भूमि-पतिः अननुसरन्, हिंस्रैः मनसापि दुष्प्रधर्षाम् एनाम् आकलयन् ईषदनवहितो यावद् बभूव, ननु तावदेव किमपि भीषणं मायामयं प्रेक्षणकं ददर्श, अचिन्तितोपनतेन अलक्षिताभ्युत्पतनेन केनापि केसरिणा आक्रम्यमाणा करुण-करुणं क्रन्दन्ती तपस्विनी नन्दिनी—

'सिंह-सन्नहन भूप ! रक्ष माम् अद्य सिंह-हननाद् हृतां हठात् ।
मामिह स्थितवतीम् उपद्रुतो दृप्त-सिंह इह हन्तुमुद्यतः ॥'

इति दैन्या वाचा आर्तसाधुं धनुर्धरम् आत्मानम् उच्चैस्तमाम् आह्वयति यत्न संहितेन सायकेन पञ्चास्यं पञ्चतां प्रापयितुं शरण्यो नरेशवरेण्य-स्तूणीरादिषु कञ्चित् तूर्णम् उद्धर्तुम् ऐच्छत; किन्तु, सर्वत्र दक्षिणोऽपि एतदीयः शयोऽदक्षिणः, सायकपुङ्ख एव सक्ताङ्गुलिः स्तब्धोऽभवत्, त्र्यम्बक-वीक्षणेन जडीकृतो वज्रं मुमुक्षन् वज्रपाणि-पाणिरिव। तदा विस्मितश्च कुपितश्च चक्रवर्ती—'अयि भोः शङ्कर-किङ्कर ! कृपालो, उपोषित

"स त्वं मदीयेन शरीर-वृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुक-बाल-वत्सा विसृज्यतां धेनुरियं महर्षेः ॥"

इति ऐरयत्। 'राजन्! यदि नाम भवान् सर्वभूतेषु स्वात्मानम् सर्वभूतानि च स्वात्मनि संपश्यति, तदा त्वदन्ते, धेनुरेषैव केवला रक्षिता स्वस्तिमती स्यात्; स्वयं जीवंस्तु, यावज्जीवं प्रजाः सर्वाः स्त्राः प्रजा इव पालयिष्यति; किं च, स्वकीयधेन्वपहारणात्मकापराधचण्डाद् गुरोश्चेद् बिभेति, घटोध्नीः धेनूः कोटिसंख्यका एतस्मै नन्दिनीप्रतिनिधिभावेन दापयित्वा, कोपः शमयितव्यः; अलं श्रमेण; गच्छ यथेच्छम्; शस्त्रेण एतदरक्षणेन, धानुष्कस्य ते यशसो न कापि क्षतिर्भविष्यति; ध्रुवम्; 'तद् रक्ष कल्याण-परम्पराणां भोक्तारम् ऊर्जस्वलम् आत्मदेहम्' इति प्रतिबोधितो बुधोपमः प्रजा-नाथः प्रत्यब्रवीत्—'भो हरे, हर-किङ्कर। मम देहो न हिंस्य इति यद्यस्ति मयि तेऽनुकम्पा, तर्हि, एनया दयया मदीय-यशःशरीरम् अहिंस्यम् अबाध्यम् अविनाश्यम् अविचाल्यं कुरु तावत्; एतावन्मात्रेण मामक आत्मा सार्थको भविष्यति। कुत इति चेत्, एकान्त-विध्वंसनशीलेषु पूतिकूष्माण्डायमानेषु पाञ्चभौतिकेषु कलेबरेषु मादृशानां न काप्यास्था;

'नरः पतित-कायोऽपि यशःकायेन जीवति।
श्रेयान् खलु यशःकायः कायाद् गर्ह्याच्च भौतिकात्॥'

इति अभियुक्तोक्तेः। ननु, सतां सख्यस्य आभाषणपूर्वकतया रुचिर-भाषणो भवान् काननेऽस्मिन् परमसुहृद् अभूत्, ततः सम्बन्धिनो मे प्रणयं, हे भूत-नाथानुग! अनिघ्नन्नेव वचनं मामकीनम् उररीकुरुतात् इति ऊचिवांसं सिंहोऽपि तथाऽस्त्विति अभ्यनन्दत्; सद्य एव पुरुषाधिराज ऋजुभूतभुजः परित्यज्य दूरतः शस्त्रादिकं, स्वकं देहं हरये सादरम् उपाहरद् आमिषपिण्डमिव; अहह! तदात्वे किमभवत्? 'सिंहो मदुपरि निपतिष्यति' इति अन्तरालोचयतः आनत-पूर्वकायस्य नृपतेरुत्तमाङ्गे विद्याधर-हस्त-मुक्ता कुसुम-वृष्टिः अपतत्; 'अयि वत्सक? उत्तिष्ठोत्तिष्ठ, भद्रं ते' इति, अमृतायमानाम् आकाशवाणीम् आकर्ण्य, उत्थितो राजा, स्वां जननीमिव पुरतस्तिष्ठन्तीं दोग्ध्रीं केवलम् अवलोकयामास, न सिंहम्;

ततश्च विस्मय-स्तिमित-नयनं नृपं नन्दिनी जगाद—"हे साधो, निर्माय महीपते ? मया मायां निर्माय, परीक्षितोऽसि ; मदन्तिकम् अन्तकोऽपि आगन्तुं च मां प्रहर्तुं च अशक्तः ; तथा सति का कथा अन्यहिंस्राणाम् ? ऋषेः प्रभावस्तत्र कारणम् ; ते गुरुभक्त्या मदनुकम्पया च प्रीये । तनय ! ईप्सितं वरं वरय ; प्रसन्नाऽहं कामदुघा खलु !"

'ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जित-वीर-शब्दः ।
वंशस्य कर्तारमनन्त-कीर्तिं सुदक्षिणायां तनयं ययाचे ॥२।६४॥'
"रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम् ॥"

..................रूपं रूपं प्रतिरूपो बभूव ।' इत्युपनिषदुपदेशानुसारम् उत्तरत्र वर्ण्यमान-दिलीप-नन्दनस्य आकृत्यनुगुणगुणगणानुगुण्य-संपादनायैव, स्वयमिव महातेजस्विनम् अपरिमेय-यशःशालिनं सुदक्षिणाऽऽनन्द-वर्धनम् रघु-वंश-काव्यजीवातुजैवातृकं साञ्जलि-बन्धम् अवनीपतिर्वैनीयक-मनोरथ-पूरक-कल्प-पादप-कल्पो ननाथ,

'आदिराज-यशो-बिम्बम् आदर्शं प्राप्य वाङ्मयम् ।
तेषामसन्निधानेऽपि न स्वयं पश्य नश्यति ॥'

इति नीतेः । ततश्च, सा पयस्विनी वितायमान-वितानायमान-मानातीत-कीर्तिमत्-सत्सन्तान-कामाय नृपाय 'तथा...' इति प्रतिश्रुत्य 'पुत्र मधुरं मदीयं क्षीरं पत्र-पुटे दुग्ध्वा उपभुङ्क्ष्व' इति इला-पतिम् आदिक्षत ; 'वत्सा[1]र्थम् देवता[2]-पित्र[3]तिथि[4]-क्रियार्थम्, गुरु[5]गुरु-पत्नी-युग्मार्थम् आत्मार्थं च आहृत्य, रक्षिताया उर्व्याः षष्ठांशमिव भवत्याः दुग्धस्य=पयसः षष्ठम् अंशम्, आचार्यस्य अनुमतिम् अधिगत्य पातुम् इच्छामि मातः !' इति क्षितीशेरितं भाषितम् आकर्ण्य अतितरां प्रीतामाहूय नन्दिनीम् आश्रमम् आश्रमम् आनिनाय । प्रसन्नेन्दुमुखो नृपाणां गुरुः गुरवे धेन्वाः प्रसादम् आवेद्य, प्रियायै प्रियं रहसि पुनरवोचत् ;

'स नन्दिनी-स्तन्यमनिन्दितात्मा सद्वत्सलो वत्स-हुतावशेषम् ।
पपौ वसिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्तमिवातितृष्णः ॥६९॥

अत्रेदम् अवधेयम्—

'सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः ।

कल्पवित् कल्पयामास वन्यामेवास्य संविधाम् ॥'

इति पूर्ववर्णितरीत्यनुसारेण तौ दम्पती सुदक्षिणा-दिलीपौ एतावन्तं कालम् एकविंशति-दिवसपर्यन्तं कान्तार-कन्द-मूल-फलाशिनावेव आस्ताम् ; द्वाविंशे दिवसे सौरभेयी परीक्षाञ्चक्रे चक्रवर्ति-भक्तिम् ; तस्मिन्नेव दिने सायं 'मदीयं पयः पिब' इति अगादीत्, पुरोनिर्दिष्टे सुभाषिते स्वीयं धवल-धवलम् अमलम् अक्षिगोचरं यश इव रुचिरं गोः क्षीरं सह देव्या पपौ ;

'तमातिथ्य-क्रिया-शान्त-रथ-क्षोभ-परिश्रमम् ।

पप्रच्छ कुशलं राज्ये राज्याश्रम-मुनिं मुनिः ॥'

इति पूर्वोक्तप्रक्रमानुरोधेन आदिकाव्ये वसिष्ठाश्रमम् अभ्यागतस्य विश्वामित्रस्य क्षत्रार्हवृतेः कुशल-प्रश्नस्य ब्राह्मणोचितस्य वर्णनमिव अत्रापि 'पयोव्रतं ब्राह्मणस्य' इति अनुशिष्टं पयोव्रतम् अनुष्ठापयामास अष्टाङ्ग-योगीश्वरः सप्ताङ्गराज्ययोगि-निभं प्रभुम् ।

'प्रातर्यथोक्त-व्रत-पारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ।

तौ दम्पती स्वां प्रति राजधानीं प्रस्थापयामास वशी वशिष्ठः ॥७०॥'

सन्मङ्गलोदग्रतर-प्रभावः, सहिष्णुः, धर्मपत्नी-सहितः, प्रजानां च हिते रतः आश्रमस्थान् सर्वान् यथाक्रमं नमस्कृत्य परिपूर्णमनोरथः श्रोत्राभि-रामध्वनिना रथेन च महारथः प्रस्थितः, पौरैरभ्युद्गम्य अभिनन्द्य च पीयमानः अनिमिषैर्लोचनैरुत्फुल्लैः ।

पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः ।

भुजे भुजङ्गेन्द्र-समान-सारे भूयः स भूमेर्धुरमाससञ्ज ॥

कालक्रमेण राज्ञी नरपतिकुलभूत्यै गर्भम् आधत्त लोकपालानुभावानुविद्धम् ॥'

( क्रमशः )

---

# श्रीश्रीकृष्णामन्त्रणम्

[ निबन्धकः—श्रीनित्यगोपाल-विद्याविनोदशर्मा ]

हे कृष्ण जीवार्तिहरावतार युगे युगे खण्डितभूमिभार ।
वर्णाश्रमावेक्षणजागरूक त्रायस्व लोकं पुरुदुःखभाजम् ॥१॥
लीलासखास्ते मनुजा धरायां सृष्टास्त्वयात्मप्रतिबिम्बकल्पाः ।
भजन्ति दुःखं किमहो न जाने दुरापमाप्त्वापि भवत्सखित्वम् ॥२॥
भ्रातः शृणु श्रेष्ठमनुष्यवृन्द त्वत्तो वरो नान्य इहास्ति कश्चित् ।
यतो नराः सत्यतमाः पृथिव्यामित्याह सत्यं कविचण्डिदासः ॥३॥
कथं तव प्रेष्ठकवेर्वचोऽद्य धत्ते महान्तं व्यभिचारभावम् ।
त्रिसत्य कृष्णानुगृहाण भूयो नीत्वा नरान् सख्यपदं स्वकीयम् ॥४॥
त्वदीयकारुण्यभृतो न जातु जनाः स्युरंहोविजिता दरिद्राः ।
पापं हि दारिद्र्यनिदानभूतं शास्तीति शास्त्रं निखिलं समोक्त्या ॥५॥
अतो जगत् कल्मषलेशशून्यं विधेहि तूर्णं सुखशान्तिनीडम् ।
"यदा यदा धर्महतिस्तदाऽहमेमी"ति वेदं सफलीकुरुष्व ॥६॥
त्वत्तो जगद्भूतमवस्थितं त्वयि त्वय्येव चान्ते विलयं गमिष्यति ।
सृष्टिः स्थितिर्नाश इति त्वदीया लीलैव लीलामयविग्रहस्य ॥७॥
लीला तवानन्दवितानमूला श्रुता श्रुतिभ्यो नतु हेतुजन्या ।
कथं नु तस्यामसमोर्ध्वतुष्ट्यां पापोत्थदुःखस्य बभूव योगः ॥८॥
आं ज्ञातमस्माभिरधर्मनिष्ठैर्जातं विपन्नैः कलुषैरसंख्यैः ।
त्वमेव तेभ्यः परमुक्तिदाता वयं प्रयाताः शरणं ततस्त्वाम् ॥९॥
रात्रौ जयन्त्यां तव जन्मतिथ्यां दुर्वारवैरिप्रशमार्थमुत्काः ।
वयं समेता व्रतपूतचित्तास्तवावताराय समाह्वयामः ॥१०॥
एह्येहि गोविन्द गवां द्विजानां धर्मात्मनां रक्षणबद्धकक्षः ।
यथैकदा त्वं धरणीमरक्षीर्गोरूपखिन्नामव तां तथैव ॥११॥

दुर्गमे भवकान्तारे यातायातैरुपद्रुतम् ।
सिञ्च पादामृतैः स्निग्धैर्नित्यं गोपालकं द्विजम् ॥१२॥

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| | | |
|---|---|---|
| October, 1938 | १८६०-शकीये आश्विने<br>२१श-वर्षस्य षष्ठ-संख्या | Vol XXI<br>No. 6 |


## कात्यायनीवैभवम्

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

दुर्गां सर्गविधौ रजोगुणमयीं शक्तिं परां ब्रह्मणः
सत्यां सत्त्वमयीं स्थितौ स्थितिमतीं लोकोत्तरां वैष्णवीम् ।
रौद्रीं ध्वंसविधौ तमोगुणमयीं रूपत्रयं बिभ्रतीं
चिद्रूपां सुरसेवितां भगवतीं कात्यायनीमाश्रये ॥१॥

काले नश्यति विश्वमेतदखिलं यस्या विशालोदरे
साब्धिद्वीपमहीध्रपादपचयं दृश्यं चलस्थावरम् ।
नानारूपमयीमरूपललितां लीलासहस्रोचितां
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥२॥

यस्या दीप्तिकणं सहस्रकिरणः संप्राप्य सौभाग्यतः
सर्वं स्थावरजङ्गमं जगदिदं सन्दीपयत्यञ्जसा ।
यस्या हास्यलवाल्लवं परिगतः पूर्णः सुधादीधिति-
स्तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥३॥

यस्या वैभवतः प्रभावनिचितः सिंहो गतः पीठतां
विघ्नेशो भवविघ्नभेदनपटुः पुत्रीभवन्निघ्नताम् ।

वागुदेवी कमला च निर्मलगुणां यामाश्रिते शाश्वतं
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥४॥
धूम्राक्षक्षयकारिणीं सकरुणां शुम्भादिविद्राविणीं
विद्यामुद्यतखड्गमण्डितकरां चन्द्रार्द्धमौलिश्रियम् ।
भक्तानुग्रहलीलया तनुमतीं दुष्टोद्धतिध्वंसिनीं
सद्रूपां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥५॥
यद्वश्यः सविता तनोति भुवने दीप्त्या प्रकाशं दिवा
वातो वाति निरन्तरः प्रतिपदं यस्या निदेशादरात् ।
आदत्ते प्रकृतिः स्वकालनियमं यस्या निदेशे स्थिता
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥६॥
निन्दां पत्युरवेत्य निःशिवमखे दक्षेण पित्रा कृतां
स्वच्छन्देन विहाय देहमचिरात् प्रावर्त्तयद् या पुरा ।
पातिव्रत्यगतिं गतिं स्थितिजुषां सीमन्तिनीनां परां
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥७॥
या पत्युर्विरहाद् भयेन महता पर्याकुला पूर्वतः
शम्भोरर्द्धशरीरतां श्रितवती लोकानुवृत्तिप्रिया ।
तामेकां बहुरूपतामुपगतां मायाममेयां शिवां
सद्रूपां सकलार्चितां भगवतीं कात्यायनीमाश्रये ॥८॥
व्याकीर्णे प्रलयार्णवेन निखिले विश्वे चलस्थावरे
विश्रामार्थमनन्तनागशयनं नारायणे संश्रिते ।
या निद्रा भगवद्विभूतिरनघा तल्लोचने संगता
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥९॥
या जीवेषु परोपकारपरता माताऽनुकम्पात्मिका
सर्वानिष्टनिवृत्तिसाधनपटुः स्निग्धा विदग्धा भृशम् ।
अश्रु स्रावयति क्वचित् क्वचिदथो हर्षाय संकल्पते
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥१०॥

यस्या विश्वमयी त्रयी गुणगणं नालं प्रवक्तुं गिरा
सत्यानिर्वचनीयतां प्रतियती तामाह ताद्दग्विधाम् ।
या देवी प्रलयोत्तरं जगदिदं भूयः ससर्ज क्रमात्
तां देवीं भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥११॥
यस्याः प्रेरणया विचित्रविभवाद्दष्टं विचित्रं फलं
दत्ते देहभृतामचेतनमपि क्षेमाय निःसङ्करम् ।
सार्वज्ञ्यादिगुणा शिवामितगुणा यामानि शैवादिभि-
स्तां देवीं भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥१२॥
या काली समरे करालवदना नग्नापि लज्जात्मिका
घोरा दानवमुण्डमण्डितकरा रक्ताक्तखड्गोद्धता ।
भीमाक्रन्दिशिवारवैर्मुखरिता रुद्रे शवे संस्थिता
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥१३॥
या तारा शवसंगताङ्घ्रियुगला नागोपवीतान्विता
शीर्षालम्बिजटाप्रतानसुभगा विद्या द्वितीया परा ।
खर्वा नीलसरस्वती मतिमतामेकायनं कामदा
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥१४॥
या ब्रह्माच्युतरुद्रशङ्करशिवैः शीर्षोद्धृते विष्टरे
शम्भोः सुप्तिगतस्य नाभिकमले प्राप्तासना षोडशी ।
रत्नालङ्कृतिरत्नमौलिललिता रक्तांशुका शोभना
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥१५॥
या भव्या भुवनेश्वरी त्रिनयना रक्ताम्बरा मुक्तिदा
बालार्कद्युतिधारिणी मणिमये सिंहासने संस्थिता ।
पद्माद्यन्वितपाणिरागमदृशां गम्या त्रिलोकप्रसू-
स्तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥१६॥
या विद्या नवसूर्यदीप्तिरुचिरा क्षौमाम्बरा भैरवी
रत्नालङ्करणा वराभयकरा रम्याक्षमालाधरा ।

आस्ये हास्यमयी विलासरहिता रत्नासने संस्थिता
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥१७॥
खड्गच्छिन्ननिजोत्तमाङ्गमभया वामे करे कुर्वती
कण्ठोत्थं रुधिरं पिबत्यनुपदं या छिन्नमस्ताह्वया ।
योगिन्यौ पिबतस्तथैव परितो यद्रक्तधाराद्वयं
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥१८॥
या धूमाभरुचा रथे स्थितिमती काकध्वजे सूर्पधृक्
क्षुत्तृष्णाक्रमकर्शिता विमलिना रूक्षा विवादप्रिया ।
भक्तानामभयप्रदा गतधवावेशेन धूमावती
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥१९॥
या पीयूषमहाब्धिमध्यगपुरीवेदीस्थसिंहासने
स्थित्वा भीमगदामुदस्यति रिपौ व्याकृष्य जिह्वाञ्चलम् ।
पीताभा वगलामुखी नयनयो रक्तानुरक्तान्तरा
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥२०॥
मातङ्गी शशिशेखरा त्रिनयना श्यामा त्रिलोकार्चिता
भक्तक्षेमकरी धृतप्रहरणा लावण्यलीलाखनिः ।
उद्यद्दीप्तिचये स्थिता मणिमये या रम्यसिंहासने
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥२१॥
नानारत्नविचित्रभूषणमयी रक्ताम्बरालम्बिनी
नागेन्द्रोद्धृतहेमकुम्भयुगलप्रस्यन्दिनीरोक्षिता ।
या देवी कमलात्मिका कमलगा जुष्टा चतुर्भिर्भुजै-
स्तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥२२॥
या नन्दस्य गृहे पुरा जनिमगाद् गोसङ्कुले गोकुले
सम्प्राप्ता मथुरामथो खलमतिं कंसं नभः संश्रिता ।
रूपं दर्शयति स्म चण्डललितं क्षिप्ता शिलापट्टके
तां दिव्यां भवभाविनीं भगवतीं कात्यायनीमाश्रये ॥२३॥

या श्यामा सिद्धसाध्या परिहृतवसना स्वामिहृन्न्यस्तपादा
दुग्धे सर्पिः प्रसूने सुरभिरभिमतो दाहिका शक्तिरग्नौ।
शैत्यं नीरे सुधांशौ रुचिरतिरुचिरा ह्लादिनी सज्जनानां
स्वान्तप्रान्ते सदा सा लसतु मम चिरं ध्वंसमायान्ति विघ्नाः ॥२४॥

---

# अभिभाषणम्*

सत्स्वपि बहुषु पूज्यतमेषु कार्यधुरीणेषु क्षुद्रोऽप्यहं सभापतिपदेऽभिषिक्त इति सत्यमहमात्मानं गौरवितं मन्ये, परं तु कार्यसंचालनं परं कथं वा भविष्यतीत्येव चिन्तयामि, अथवा तु—विशिष्टानां सभ्यानां सभा हि सभ्यैरेव चतुरैः क्षमयैव सर्वमपि कार्यं निर्वहद्भिर्निरुह्यत इति को वा चिन्तावसरो विशिष्टानामुत्तमानां च सदस्यानां सभासु सभापतिपदग्रहणे क्षुद्रतमस्यापि। धार्मिकसभा हि—धर्मपरतन्त्राणां भगवत्परतन्त्रतामेव परस्वं मन्वानानां च सभ्यानामवलम्बनेनैवात्मानं लभते, इति सभापतिं स्थूणप्रायमपि शिलामयमपि वा तदभिप्रायमेवानुसृत्य सर्वं कार्यजातं सभ्या एव संपाद्य संभावयिष्यन्ति। इदमेवात्र सत्यं मन्ये—यत् सभ्याः सर्वेऽपि व्यष्टिरूपां स्वां स्वां शक्तिं समष्टिरूपेण सभापतिपदे आवहयन्ति, इति का वा चिन्ता स्वीयां व्यष्टिशक्तिं विस्मृत्य सर्वेषां प्रतिनिधिभावेन समष्टिशक्त्यैवावाहितया सभाकार्यसंचालने साधारणस्यापि, यस्य विशिष्य पवित्र-श्रीतारकेश्वर-क्षेत्रमाहात्म्यं सर्वेश्वर-श्रीतारकेश्वरकृपाकटाक्षः, स्वनामधन्य-पूज्यपादश्री १०७ तारकेश्वरपीठाधिपति-श्रीजगन्नाथाश्रमचरणानामनुग्रहश्च स्वीयकार्यदक्षतां विशेषतः पोषयितुं सदैव जागर्ति।

---

* श्रीतारकेश्वरधर्मसंवर्धिनीसभायां सभापतिपदमधिष्ठितानां महामहोपाध्याय-श्रीयुक्तानन्तकृष्ण-शास्त्रिणामभिभाषणम्।

## धर्मरक्षणावश्यकता

धर्मसंरक्षणं हि तत्तद्व्यष्टेरेव कार्यम्, न तु समष्टेः। व्यक्त्यधिकारिको हि धर्मो नाम न समष्ट्यधिकारिकः। यत्रैषा व्यष्टयः कार्यकर्त्र्यः, फलभोक्तारस्तु बहव इति यत्र स समष्ट्यधिकारिकः। अर्थशास्त्रे समष्ट्यधिकारः, न तु धर्मकाममोक्षेषु। तत्तदीयो धर्मः कामो मोक्षश्च तेन तेनैव संपादनीयः, पित्रा पुत्रेण भार्यया पत्या सुहृदा वा क्रियमाणो भुज्यमानः प्राप्यमाणश्च धर्मः, कामो मोक्षश्च तस्य तस्यैवोपकरोति, नान्यस्य कस्यापि। समष्ट्यधिकारिका हि अर्था मरणान्तमेवानुवर्तन्ते, न तु तदनन्तरमपि। पुरुषबुद्धीनां मरणपर्यन्तेष्वेव फलेषु विचारशक्तिः, न जन्मान्तरोपभोग्यस्य फलस्य धर्मस्य वा विचारेऽपि, अतो यः कोऽपि निर्णयोऽर्थेष्वेव समष्टिसाध्यो भवति। तत्रापि—धर्माविरोधेनार्थानामुपयोगे धर्मफलमपि, धर्म-विरोधेनाधर्मानुगुणतया वा तदुपयोगे तु अधर्मफलमपि। पुरा हि—मतान्तरानुसारिभिः भारतीयधर्मस्याक्रमणकालेऽपि व्यक्तिविशेषा अवतारपुरुषाश्च तत्तदाचार्याः स्वयं गुप्तरूपेण धर्मं पर्यपालयन्। धर्मस्य हि ग्लानिर्विपत्तिर्वा परमात्मन एव ग्लानिर्विपत्तिर्वा। किं बहुना, तत्तदात्मन एव ग्लानिर्विपत्तिर्वा। न हि शरीररक्षणमेवात्मरक्षणं नाम, शरीर-रक्षणार्थमर्थानां रक्षणम्, आत्मरक्षणार्थं धर्मस्य रक्षणम्। शरीरं हि विशरणस्वभावं न स्थिरम्, आत्मा तु न विशीर्यते, किन्तु शीर्णेऽप्येकस्मिन् शरीरे शरीरान्तरं नियतं गृह्णाति। तदुक्तं गीतायाम्—

"वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही"ति॥

अत इदमेव संसूच्यते—यदात्मा यदि रक्षणीयः, तर्हि स्वधर्मरक्षा कर्तव्या, यत्र—श्रुतिस्मृतीतिहासपुराणादयः प्रमाणम्।

## अधिकारिभेदेन धर्मभेदः

धर्मा हीमे सात्त्विका राजसास्तामसाः, तत्रापि मुख्या गौणा आपद्धर्माश्चेति बहुविधाः। तत्र सात्त्विकानां दैवतानां स्थाने तामसधर्मणा-

मनुष्ठानम्, तामसदैवतानां स्थाने सात्त्विकधर्माणामनुष्ठानं च महत एवानर्थाय स्यात्, यतो यक्षानुरूपो बलिः। तदत्र श्रीतारकेश्वरस्थाने श्रीतारकेश्वर-मन्दिरं सात्त्विकपूजास्थानम्, कालीमन्दिराणि तु तत्र तत्र विद्यमानानि तामसपूजास्थानानीति तत्तत्स्थानभेदेन तत्तद्धर्माणां रक्षणमेव सर्वेषां परमं कर्तव्यम्, न तु सांकर्येण सर्वत्र सर्वेषाम् अनुष्ठानम्, अथवा सर्वत्र सर्वेषां त्यागः। सांप्रतं हि तामसधर्मा बलिदानादयः कैश्चन सर्वत्र त्याज्या मन्यन्ते, कैश्चन सर्वत्र कर्तव्या मन्यन्त इति महतीयं दुर्दशा भारतीयानाम्। अत्यन्तपरोक्षे हि धर्मफले न कोऽपि प्रभुः, येन धर्माणां प्रवर्तने निवर्तने वा कोऽपि स्वतन्त्रः प्रभवेत्, धर्मपदस्य स्थानेऽधर्मपदस्य स्वेच्छानुसारेण प्रयोगो मृन्मयेनाश्वेन नदीतरणमेव। अयमेव न्यायः—मुख्य-गौणादि-धर्मेष्वपि। शक्तो मुख्यधर्माधिकारी, अशक्तो गौणधर्माधिकारी, आपन्न आपद्धर्माधिकारी। कस्य शक्तिः? कस्याशक्तिः, कस्य वा आपत्तिरिति तु तेन तेनैव निर्धारणीयम्, नान्येन केनापि व्यष्टिरूपेण समष्टिरूपेण वा। भारतीयानां ह्यस्माकं धर्मो न कस्यापि दुराराध्यः। आपत्तौ हि सत्यां न केवलं स्वधर्माननुष्ठानं न दोषाय, किन्तु यावदापत्ति निषिद्धानामनुष्ठान-मपि स्वीयापत्तिपरिहारार्थं धर्म एव। स च यथासंभवं तत्तद्देशजातिकुला-चारादिक्रमेण, यदि न प्रबलप्रमाणविरोधः, तर्हि अवश्यमेव परिपालनीयः। पैतृकं धनमात्मनो धनं मन्यते, पैतृकं गृहमात्मनो गृहं मन्यते, पैतृकी भूसंपत्तिरात्मनो भूसंपत्तिर्मन्यते, पैतृकमेव रक्तं मांसादि वात्मशरीरगत-मात्मनो रक्तादिकं मन्यते, केवलं पैतृको धर्मो नात्मनो धर्मो मन्यते इति साहसमेवेदम्।

## धार्मिकजनताया न न्यूनता

सत्यं राजनीतिक्षेत्रे नेतृत्वमेव नेतॄणां सर्वत्र गौरवं वर्धयति, न धार्मिक-क्षेत्रे। किं तत्र कारणम्? यतः समष्टिरूपेण कार्यक्षेत्रे तत्रैव सर्वे सोत्साहा दृश्यन्ते, धार्मिकक्षेत्रेषु तु व्यष्टिरूपेणैव प्रवर्तन्ते। संख्या तु यदि स्थूल-दृष्ट्याऽपि पर्यालोच्यते, तर्हि धार्मिकजनताया एव। प्रत्यक्षमिदं सर्वेषाम्

यत् हरिद्वारादिपुण्यक्षेत्रेषु, किं बहुना ? श्रीतारकेश्वरक्षेत्रेऽपि तत्तादृशोत्सवाद्यवसरे विनैवाह्वानं विनैव भोजनादिप्रबन्धं पूर्वतनं लक्षाधिका जना मिलन्तीति कथमिदं संकल्पयितुमपि शक्यते धार्मिकजनताया भारतवर्षे न्यूनता नामेति । सत्यप्येवं भारतीया वयं तत्तदुत्सवादिदर्शनमात्रेण कृतकृत्यमात्मानं मन्वानाः स्वधर्मविषये परेषामाक्रमणं प्रत्यहमनुभूयमानमपि कथमपि प्रतीकारेण तत्तादृशेन निरसनीयं न मन्यामहे। माहम्मदादयस्तु प्रत्यवसरं प्रतिदिनं प्रतिक्षणं च तत्र तत्र मिलिताः स्वधर्मरक्षामपि प्रधानतमं लक्ष्यं मन्वानाः स्वधर्मरक्षाव्याजेन राजनीतिक्षेत्रेऽपि संभूय व्यवहरन्तीति कस्य वेदं परोक्षम् ? कारणं चात्र मन्यामहे—तत्तत्क्षेत्राधिष्ठातारो भारतीयाः स्वधर्मरक्षणाख्ये व्यापारे उदासीनाः, ततश्च तदीयाः सेवकाः, अन्तेवासिनः, शिष्यवर्गाश्च स्वाचार्यानेव सर्वत्रानुकुर्वन्ति, क्रमेण च धर्माधिपतयोऽपि शिष्यवर्गैरपि तृणाय मन्यन्ते, धर्माधिपतीनां संपत्तिरपि विरोधिभिरेव क्रमेण स्वायत्ती-क्रियते चेति धर्माचार्याणामौदासीन्यम्, धर्माचार्याणां स्वीयसंपत्तीनां धर्मप्रचारविषये विनियोगेनान्यत्रैव विशेषतो विनियोगेन च व्यवहरणमितः परमपि यद्यनुवर्तेत, तर्हि का वा दुर्दशा भवितेति चिन्तयितुमपि न शक्यते। इदमत्र महद् दुःखकारणम्—यद् धार्मिकसंस्थानां संपत्तयो बहोः कालादारभ्य तत्तद्धर्माचार्याणां वैयक्तिकसंपत्तयो यदासन्, तत्रापि महती विपत्तिरिदानीमनुभूयते। तत्र प्रत्यक्षमन्यतममस्माकं श्रीतारकेश्वरसंस्थानमेव, यत्रेदानीं तदधिपानां स्वसंपत्तिविनियोगविषयेऽन्यमुखनिरीक्षणं कर्तव्यं समार्पिततम्। अन्ये चात्र केचन धर्मपरिवर्तनवादिनः, केचन धर्मपरिवर्तनवादिनोऽपि धर्माचार्यस्वातन्त्र्यपरिवर्तनवादिनः, केचन च प्रत्युपकाररूपेण स्वप्राधान्यमपेक्षमाणाश्च वर्तन्ते। धर्माचार्याणां गौरवं रक्षणीयमिति भावेन व्यवहरन्तस्तु विरलविरलाः। सत्यमेकः कर्माणि कुरुते फलं भुङ्क्ते महाजनः। अत इदं मयाऽवश्यकर्तव्यं मन्यते—यत् प्रत्येकधार्मिकसंस्थानाध्यक्षाणां समुचितगौरवरक्षणेन तेषामेव नेतृत्वं पुरस्कृत्य च तत्र तत्र सनातनधर्मसंवर्धिनीनां सभानां सघटनम्, तेन धार्मिक-

जनानां तत्तादृशोत्सवाद्यवसर उपस्थितानां तत्तद्धर्माचार्यद्वारा तत्तदास्थानपण्डितानां द्वारेण च स्वधर्मरक्षणे प्रोत्साहनम्, तेन च तदा तदा धर्मविरोधिनां व्यवस्थापकसभादिषु प्रस्तूयमानानां शासनविशेषाणां विरोधनं च नाम।

उपसंहारः

तदत्र श्रीतारकेश्वरक्षेत्रसंस्थानाध्यक्षा यदि मार्गदर्शिनो भविष्यन्ति, तर्हि सत्यं किमपि प्रयोजनमनयाऽपि सभया प्राप्येत। विश्वसिमि—एतत्सभाप्रवर्तका अनेनैव भावेन सभामिमां संयोजयन्ति, येनान्ततो गत्वा श्रीतारकेश्वरसंस्थानसंपत्तयस्तदध्यक्षास्तत्क्षेत्रनिवासिनश्च सुरक्षिता भवेयुः। अन्तत इदमाशास्यते—यदि कस्याश्चनोपदेशकसमित्याः सूचनानुसारमेव संपत्तीनामुपयोगः कर्तव्यः, तर्हि इयमेव सभा स्वप्रतिनिधीनां द्वारेण तदपि कार्यं यथा कुर्यात्, तथा भगवाननुगृह्णातु, बङ्गीयब्राह्मणसभाऽपि समुचितां दृष्टिं विधायात्र यथोचितं सयोगं दास्यतीति परमो मम विश्वासः। एवं सति हि—न केवलं समुचितोपदेशकमण्डल्याः समुचितस्य दैनिकस्यैकस्य पत्रस्य च, किन्तु संस्कृतविश्वविद्यालयस्य च तत्र तत्र धर्मप्रचारार्थं प्रवर्तनेन कृतकारिणीयं सभा स्यात्।

राजनीतिक्षेत्रविषये तु न मया, न केवलं भारतीयानां मध्ये, किन्तु मनुष्यमात्रे विभागः काम्यते,। तत्र हि यथासंभवमेकैव मुख्या सभा रक्षणीया। धर्मभेदेन राजनीतिक्षेत्रे विभागकल्पनया हि प्रतिक्षणं रक्तप्रवाह एव संभाव्यते, मम तु मतम्—धार्मिकसभानां राजनीतिक्षेत्रेण लेशतोऽपि सम्बन्धो न रक्षणीयः, सांप्रतं राजनीतिक्षेत्रे तत्तादृशधर्मविरोधिनां शासनानां प्रस्तावोऽपि तयोः सम्बन्धरक्षणे नैवावसरं प्राप्तः। भारतवर्षे हि—बहव एव धर्मभेदा वर्तन्ते, इति अर्थशास्त्रेण साकं तत्सम्बन्धरक्षणे तत्तद्धर्माचार्याणां सर्वेषामपि संघटनं कर्तव्यं समापतति, यत्तु दुःसाधमेव, अतो भवतां केवलं धर्मसंरक्षणार्थैव प्रवृत्तिर्मया विशेषतः श्लाघ्यतया मन्यते। धर्मसंस्थाद्वारा कर्तव्यान्यपि—

धार्मिकशिक्षाप्रणाल्या

सामुदायिककार्याणि—विद्यादानम्, अनाथालयानां रक्षणेनानाथानां परिपालनम्, आयुर्वेदादिप्रचारार्थं चिकित्सालयानां स्थापनम्, उपदेशकमण्डलीद्वारा धर्मोपदेशनम्, मतान्तरानुसारिभिस्तदा तदा क्रियमाणानामाक्रमणानां प्रत्युत्तरादिप्रदानेन धार्मिकजनताया बुद्धेश्चाञ्चल्यनिराकरणम्, धर्मशास्त्राविरोधेन मतान्तरमज्ञानतः कामतो वा प्रविष्टानामपि समानयनम्, इत्यादीनि बहूनि कार्याणि वर्तन्ते। विश्वसिमि सभेयं श्रीतारकेश्वरमठाध्यक्षाणां साहाय्येन यथावसरं सर्वाणि कार्याणीमानि करिष्यति।

अन्ते पुनरिदमपि निवेद्यते—यत् श्रीतारकेश्वरपीठाधिपतीनां सविधे इदमपि इयं सभा प्रार्थयितुं शक्नोति—यत् धार्मिकायव्ययादिसमालोचनावसरे एतत्सभानियुक्तायाः कस्याश्चनोपसमितेरपि सूचनं यथावसरं दीयमानं कृपया विचारणीयम्, येन धार्मिकजनतापि विशिष्य सन्तुष्टा स्यादिति।

अन्ते श्रीमतां सर्वेषामुपरितनकार्येषु बद्धादराणामुपरितनकार्यार्थमेवावसर इति सांप्रतमत्रैवोपसंह्रियते।

———

# प्रशान्तरत्नाकरम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

३यः—आम् एते सर्वे एव निर्गताः पादपतलमाश्रित्य व्याकुला विलपन्ति। प्रधानामात्यो वाचस्पतिश्च सर्वान् सान्त्वयति।

१मः—अये, किन्नु खल्विदम्, एषा कापि स्त्री सोरस्ताडं रुदती प्रज्वलिताद् गेहान्निर्गता, अये एषा किमपि याचमाना प्रत्याख्याता इत एवाभिवर्तते। तत् किन्नु खल्विदम्?

( ततः प्रविशति सोरस्ताडं रुदती स्त्री )

स्त्री—भो भो महात्मानः! परित्रायन्तां परित्रायन्तां मे पुत्रम्!

१मः—विशेषं ब्रूहि।

स्त्री—भद्रमुख, एषाहं दासी प्रधानामात्यस्य, एष मे विधवाया एकमालम्बनं पुत्रः स्तनन्धयो दहनेन सर्वतः प्रदीपिते गेहे विपद्यते। नास्त्यस्य कोऽपि त्राता। हा पुत्र क्वासि, हा पुत्र।

२यः—को वा स्वजीवनं तृणीकृत्य तव पुत्रस्य रक्षणार्थं स्वेच्छया दहनं प्रविशेत्? तावतैव सन्तोषं भज, यदात्मनो जीवनं प्राप्नासि।

३यः—को वा संशयः?

स्त्री—हा हा! तर्हि सत्यमेव नास्ति मे वत्सस्य कोऽपि परित्राता? हा वत्स, नयनानन्द, हा दुःखिनीजीवन, हा मातृप्रिय, कथं त्वां जीवितमासादयेयम्? अथवा अलं कालहरणेन, एषा अहमपि वत्सेन सहैव ज्वलनप्रवेशं कृत्वा प्राणांस्त्यक्ष्यामि। ( गन्तुमीहते )।

१मः—भद्रे, क्व गच्छसि?

स्त्री—वत्सस्य मे प्राणाधिकस्य वियोगं सोढुमशक्ता ज्वलने प्रवेष्टुम्।

१मः—भद्रे, अलमलं साहसेन, निवर्तस्व, एषोऽहम्

स्वजीवनव्ययेनापि ज्वलनात्तव पुत्रकम् ।
पलकेनोद्धरिष्यामि दिश पन्थानमग्रतः ॥

स्त्री—इत इतो भद्रमुख । ( निष्क्रान्तौ )।

३यः—अहो अस्य औदार्यम्! येन स्वजीवनं संशयगतमुत्प्रेक्ष्यापि परार्थं प्रवर्तते ।

२यः—अत्र औदार्यं कारणं सौन्दर्यं वेत्यत्र नास्ति मे निर्णयः ।

४र्थः—धिक् प्रहसनम्!

देववत् पूतशीलेऽस्मिन् कलङ्कः कल्प्यते त्वया ।
स्वस्वभावानुरूप्येण वृत्तमन्यस्य मन्यते ॥

२यः—भवतु, समये द्रक्ष्यथ ।

४र्थः— बाढं द्रक्ष्यामः ।

( ततः प्रविशति सपुत्रया तया स्त्रिया सह प्रथमः )

१मः—मातः! यथाकालमेव भवत्या वयं प्रबोधिताः स्मः, येनायं पुत्रकस्ते निराबाधं जीवनं प्राप्तः। यदि क्षणादूर्द्ध्वं प्राबोधयिष्यः सत्यं पुत्रकं नालप्स्यथाः ।

स्त्री—वत्स, कृतज्ञतया न मे वाचः स्फुरन्ति । तत् किमपरं कथयामि, एवं कुर्वाणः सुचिरं सुखेन जीव ।

१मः—मातः! नायमधिकं वक्तुं समयः। पश्य—

दहनेन प्रदह्यन्ते गृहस्थानाममी गृहाः ।
जीवनं संशयं प्राप्तं गतिस्तेषां सुदुर्गता ॥

तदलं मामधिकृत्य भवत्याः कृतज्ञतया, एनं दीर्घायुषं ते पुत्रकमिव मामपि दीनं पुत्रकमेव मन्येथाः। तत् क्षणमन्तराले तिष्ठ, यावदहं लब्धावसरस्त्वां मदीयाया मातुः सकाशं प्रापयिष्यामि, अलं स्वकुटुम्बपरित्राणमात्रव्यसनिनामावासे तवावस्थानेन ।

स्त्री—अहो सुतरामनुगृहीतास्मि ।

१मः—आर्ये, नानुगृहीता खल्वेतेन भवती, परमहमेव सुतरामनुगृहीतोऽस्मि। तथाहि—

उपकाराय सामर्थ्यं धात्रा यस्मै वितीर्यते।
स एव सुतरां धन्यो न त्वेवोपकृतो जनः॥

तदलमत्र भवत्याः कृतज्ञतानिवेदनलाघवेन।

स्त्री—भवतु, भवदनभिमतञ्चेत् परिहृत्य अन्तरालमेव समाश्रित्य मम पुत्रस्य प्राणदातारमपेक्षे।

१मः—एवं क्रियताम्। ( निष्क्रान्ता सपुत्रा स्त्री )।

३यः—अये, कथञ्चित् प्रशान्तिमुपयातो ज्वलनः।

१मः—अहो, भूयसा प्रयत्नेन पौराणां प्रासादमधिवसतां सैनिकादीनाञ्च प्रायः शान्तिमाप्तो वह्निः! तथापि वह्निशेष ऋणशेषो व्याधिशेषश्च नोपेक्षणीया इति निःशेषमसौ शमयितव्यो वह्निः। अहो!

यावच्छीघ्रं वृद्धिमायाति वह्निस्तावच्छीघ्रं नास्ति तस्योपशान्तिः।
रोगः स्वल्पेनैव कालेन दृप्तः कालेनाल्पेनैव नोपैति शान्तिम्॥

अहो दहनस्य नैष्ठुर्यम्!

बहुप्रयत्नैरुपकल्पितं गृहं क्षणेन नीत्वा बत भस्मशेषताम्।
निराश्रयस्तेन कृतो जनोच्चयस्तरोस्तलं जातममुष्य सम्बलम्॥

केचिद् बान्धवनाशशोकविकलाः क्रन्दन्ति तारस्वरं
केचिद् द्रव्यपरिक्षयेण परितो भ्राम्यन्ति मत्ता यथा।
केचिद् वह्निशिखाविदग्धवपुषः सीदन्ति दीनस्वराः
कष्टा हन्त दशा विभाति पुरतो दैवी गतिर्दुस्तरा॥

कथङ्कारमाविर्भूतोऽयमग्निरिति शक्यमिदानीं विचारयितुम्।

वैरं शोधयितुं किं वा केनचिद्दुष्कृतं कृतम्?
न सर्वपुरविध्वंसमस्मानमूढेन चिन्तितम्॥

अथवा नूनं राज्ञो दुरन्तवृत्तदुर्मनायिताः पौरा एव राजकुलदाहं कल्पयन्तस्तथाऽनुष्ठितवन्तः। अहो मूढता पौराणाम्!

भूपतेरपराधेन दीनामात्या निपीडिताः ।
पश्यतामपि तेषां यत् केचिद्दग्धाः स्वबान्धवाः ॥

अथवा प्रतिकूले दैवे किं वा शक्यं प्रतिविधातुम् । अये, एते राजप्रासादान् सम्मिलिताः पुरुषाः एकैकशो निवर्तन्ते, प्रायेण शान्तिमुपागतो वह्निः ।

( नेपथ्ये 'अत्याहितं भो महदत्याहितम् !' )

सर्वे—किन्नु खलु स्यात् ?

( पुनः नेपथ्ये )

राजप्रासादमासाद्य हत्वा च द्वाररक्षिणः ।
हृतानि राजकोषस्य रत्नानि खलु तस्करैः ॥

१मः—( स्वगतं ) अहो, युक्तमनुष्ठितं तस्करैः, तथाहि—

अन्यायेनार्जितं वित्तमेवमेव प्रणश्यति ।
अनेन खलु चौराणां नास्ति पातकमण्वपि ॥

नूनमस्यैव साहसिकस्य कर्मणः सुसम्पादनाय वह्निप्रयोगोऽपि तस्करैरेव कृतः प्रतिभाति । अहो निपुणता चौरपरिवृढानाम् ! तत् केन खलु निपुणकेनायमधिष्ठितस्तस्करसमाजः ? अपिनाम परममित्रेण मे रत्नाकरेण समधिष्ठितः स्यात् ? अथवा कः सन्देहः ?

विना रत्नाकरं को वा साहसे तादृशे क्षमः ।
को वा पञ्चाननादन्यो जायतां गजमर्दनः ॥

तन्मयापि रत्नाकरमैत्रीमपदिश्य राज्ञः कोपविजृम्भितपरिहाराय कुटुम्बसौकर्याय च परममित्रं रत्नाकर एवानुवर्तितव्यः । तद् यावद् द्वितीयां मातरमादाय गृहं गत्वा स्वीयजनन्या समं मित्रमेवान्विष्य समीहितं सम्पादयामि ।

नेपथ्ये—'भो भो निशाधिकृता रक्षिणः ! एष महाराजः समाज्ञापयति—सत्वरं चौरग्रहणाय क्रियतां परिकरः ।

यदि न ग्रहणं शक्यं चौराणां श्वो रवौ स्थिते ।
तदा प्राणहरो दण्डः सर्वेषां वो विधास्यते ॥

१मः—अहो, विधिवैशसं स्वल्पवृत्तिभाजां रक्षिणाम्! भवतु राज-कुलमत्याकुलं पश्यामि। तत् सत्वरं गच्छामि।

सर्वे—अये, राजकुले चौर्यम्! अहो महद् भयं प्राप्तम्! तत् स्वं स्वं गेहं प्रति गच्छामः। ( निष्क्रान्ताः सर्वे )।

( ततः प्रविशति सचिवेन सह सपरिवारो राजा )

राजा—अहो, साहसं तस्कराणाम्!

उग्रे जाग्रति भूनाथे मयि दण्डनियामके।
ममैव गेहे चौराणां मर्यादाभङ्गसाहसम्॥

आर्य मित्रावसो, नूनं सन्निधिस्थाः पुरुषा एव तस्करा इति मन्ये, अन्यथा कथं यावदेव ज्वलितो वह्निस्तावदेव सङ्गच्छते चौर्यसिद्धिः? तत् क्रियतां निपुणतया चौरनिर्णयप्रबन्धः। आदिष्टाश्च वृत्तश्रवणमात्रेणैव मया रक्षिणः;

मन्त्री—किमिति?

राजा—यदि न ग्रहणं शक्यं चौराणां श्वो रवौ स्थिते।
तदा प्राणहरो दण्डः सर्वेषां वो विधास्यते॥

मन्त्री—देव, न सन्निहितेष्वेव तस्करान् पश्यामि।

राजा—अन्यथा दैवाद् वह्निज्वलनदशायां शून्यं राजपुरं वीक्ष्य तेषां तदैव युक्ता प्रवृत्तिः?

मन्त्री—देव, वह्निप्रयोगमपि चौरप्रयुक्तमेव सम्भावयामि। नियतं निपुणकेन केनापि नियन्त्रा समधिष्ठितश्चौरसमाजः, येनैवं सम्भाव्यते।

राजा—अहो, नूनमविचारितमनुष्ठितं दुर्गेश्वरलिपिलाभपर्याकुलेन मया सबलवाहनानसंख्यानेव सैनिकान् दुर्गं प्रति सम्प्रेष्य प्रायेण पुरमिदं निःसहायं कृतवता! तत् स्वकृतस्यैव कर्मणः फलमिदमास्वाद्यते।

मन्त्री—देव, तत्रापि संशयितोऽस्मि।

राजा—कीदृशः संशयः?

मन्त्री—अपि नाम सा लिपिरपि कूटघटिता स्यात्?

राजा—आर्य बृहस्पते, नैवं सम्भवति।

मन्त्री—कथमिव ?

राजा—सुष्ठु प्रत्यभिज्ञायते मया दुर्गेश्वरस्य सिंहवर्मणो हस्तलेखः।

मन्त्री—आम् ! सुनिपुणैः कूटेन घटिता लेखाः सुतरामादर्शलेखमनुकुर्वन्ति।

राजा—आर्य, अप्येवं सम्भवति ?

प्रविश्य प्रतीहारी—जयति जयति देवः।

राजा—अये, जयसेने ! सम्भ्रान्तासि, तद् विवक्षितं ब्रूहि।

प्रती—देव, एष तुरङ्गमारुह्य समागतो दुर्गेश्वरेण सिंहवर्मणा प्रेषितः पुरुषो महाराजं सत्वरं द्रष्टुमिच्छति।

राजा—सत्वरं प्रवेशय।

प्रतीहारी—यथाज्ञापयति देवः ( निष्क्रान्ता )।

राजा—आर्य मित्रावसो, पर्याकुलोऽस्मि, भवान् पुनः किं मन्यते ?

मन्त्री—दृढ एव मे तत्र संशयः। जानामि भवत्प्रेषितान् सैनिकान् सहैव च प्रेषितं पत्रमुपलभ्य विदिततत्त्वो विपत्परिहाराय सिंहवर्मा तुरङ्गेण पुरुषमिमं प्रेषितवानिति।

राजा—भवतु, अनन्तरमेव निर्णयं गमिष्यामः।

( प्रतीहारी पुरुषेण सह प्रविश्य )

प्रती—एष देवस्तिष्ठति, उपसर्पतु भवान्। ( निष्क्रान्ता )।

पुरुषः—जयति जयति देवः।

राजा—भद्र, कथय अपि प्राप्ता दुर्गरक्षणाय इतः प्रेषिताः सैनिकाः ?

पुरुषः—देव, अथ किम्। तान् भवत्प्रेषितं पत्रञ्च समुपलभ्य सुतरां विस्मितो दुर्गेश्वरः पत्रमिदं विलिख्य भवन्तं सत्वरं प्रापयितुं तुरङ्गमेण मां प्रेषितवान्। तदिदं पत्रमेव देवं विदितार्थं करिष्यति।

राजा—शीघ्रमुपनय।

पुरुषः—इदं तत् पत्रम्।

राजा—आर्य मित्रावसो, दृश्यतां पत्रम्।

मन्त्री—( गृहीत्वा वाचयति ) स्वस्ति देवाय, एष प्रणतः सिंहवर्मा विज्ञापयति, सत्यपि निःसपत्ने दुर्गं शैलेश्वरेण दुर्गमाक्रान्तमावेद्य मन्नाम्ना कूटलेखसम्पादनेन दृढं वञ्चितः श्रीमान् केनापि। तत् सम्भावितानिष्ट-परिहाराय त्वरितगामिना तुरङ्गेणायं पत्रवाहः पुरुषः प्रेष्यते। ज्ञात्वा देवः प्रमाणम्। किञ्च नातिचिरमेव पुनः प्रेष्यन्ते श्रीमता परिप्रेषिताः सैनिका इति। एतत् पत्रम्।

राजा—भद्र, गच्छ, विज्ञापय दुर्गेश्वरं सिंहवर्माणं सत्यं वञ्चितोऽस्मीति।

पुरुषः—यथाज्ञापयति देवः। ( निष्क्रान्तः )।

राजा—आर्य, मित्रावसो, विस्मितोऽस्मि, तस्कराणामनेन कपट-प्रबन्धेन। तदस्य प्रतीकारश्चिन्त्यताम्।

मन्त्री—देव, नैते साधारणास्तस्कराः। महानेप तस्करसमाजो नूनं केनापि चतुरचूडामणिना नियामकेनाधिष्ठित इति तर्कयामि।

राजा—आर्य मित्रावसो, यथा तथा वा भवतु, आदिश्यन्तां दृढं राजपुरुषाः,

सन्देहो यत्र यत्र स्यात् तत्र तत्र कृतक्रमाः।
सान्त्वं वा परुषं वापि कुर्वतां चौरनिर्णयम्॥

आर्य, मित्रावसो, दुर्भिक्षेण सर्वतो विक्षुभिते जनपदे वृत्तभङ्गः सम्भाव्यते जानपदानाम्, श्रूयते च केचिद् अलब्धगतयः क्वापि प्रस्थिता इति, तदादौ त एव मृग्यन्ताम्।

दारिद्र्यदोषेण कुटुम्बयुक्ता ये राज्यमेतत् परिहाय याताः।
ये चाप्यकस्माद्धनिकाः प्रजाता दैन्यात् परं संशयगोचरास्ते॥

मन्त्री—युज्यते।

राजा—अहो, दुर्विलसितं साहसिकानाम्! न केवलं रत्नागारमेव चोरितम्, भूयसां प्राणिनां प्राणा अपि अपहृताः। तथाहि—

केचिद् विपन्ना ज्वलनेन दग्धाः केचित् स्वहस्तेन हताश्च दुष्टैः।

मन्त्री—प्राणैर्विहीना नहि दुःखभाजस्तापो महान् हा सुहृदां स्थितानाम् ॥

राजा—भाग्येन खलु भवानभिरक्षितो भवद्गृहञ्च दूरतः परिवर्जितं हुताशनेन। प्रवरामात्यस्य वाचस्पतेः पुनः सुतरां कष्टा दशा वर्तते, येन तथा विपत्पाते प्रपन्नेऽपि तमाकारयितुं नाहं प्रावर्त्तिपि। भवतु, आर्य मित्रावसो, अलं विलम्बेन, भवान् स्वयमेव राष्ट्रियं कृत्ये नियोजयतु, एवं किल कृत्यं गुरुकं गृह्येत। तदादिश्यतां मद्वचनाद् राष्ट्रियः—

मन्त्री—किमिति ?

राजा—एवमादिश्यताम्—

रात्रावेव चरन्तु राजपुरुषाः पौराश्रमानश्रमा<br>
गुप्ता गुप्तकृपाणका बलभृतस्ते राष्ट्रियाधिष्ठिताः।<br>
ये चौरा धनहारिणः सपदि ते नाद्यापि दूरं गताः<br>
पौरा वा यदि तस्करास्तदचिरं शक्या ग्रहीतुं हि ते ॥

प्रभातायाञ्च रजन्याम्—

भूतावासतया प्रसिद्धभवने कृत्वा प्रवेशं रहो<br>
गेहान्तस्थितकानने च विजने घोरे चरित्वा परम्।<br>
शैले पत्तनसीम्नि कानवृते दृष्ट्या मुहुस्तीक्ष्णया<br>
चौराणामपि चोरितस्य वसुनः कुर्वन्तु ते निर्णयम् ॥

अथवा आर्य मित्रावसो, भवता सह राष्ट्रियं दृष्ट्वा अहमेव स्वयं कृत्य-गौरवाय उपदिशामि।

मन्त्री—एवमस्तु। ( निष्क्रान्तौ )।

तृतीयाङ्कः समाप्तः

---

# धर्मपत्नी

## ( २ )

[ निबन्धकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

व्यतीत-वैशाखसंख्यायां धर्मपत्नीप्रबन्धस्यान्तिमे भागे वेदान्तकल्पतरुकारस्य मतं समुद्धृतम्। तत्र चानवधानतया अमलानन्द इत्येतस्य स्थाने अप्पयदीक्षित इति निवेशितम्। अत एवेदानीं वाचकमहाभागानां विचारसौकर्यार्थं भामतीकारादीनां वचनान्युद्ध्रियन्ते। तत्र शाङ्करभाष्यस्य "ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा" इति वचनं व्याचक्षाणैर्भामतीकारैरुक्तम्—"ब्रह्मजिज्ञासापदव्याख्यानमाह—ब्रह्मण इति। षष्ठीसमासप्रदर्शनेन प्राचां वृत्तिकृतां ब्रह्मणे जिज्ञासा ब्रह्मजिज्ञासेति चतुर्थीसमासः परास्तो वेदितव्यः। तादर्थ्यसमासे प्रकृतिविकृतिग्रहणं कर्तव्यम् इति कात्यायनीयवचनेन यूपदार्वादिष्वेव प्रकृतिविकारभूतेषु चतुर्थीसमासनियमात्, अप्रकृतिविकारभूतइत्येवमादौ तन्निषेधात्, 'अश्वघासादयः षष्ठीसमासा भविष्यन्ति' इत्यश्वघासादिषु षष्ठीसमासप्रतिविधानात्, षष्ठीसमासेऽपि च ब्रह्मणो वास्तवप्राधान्योपपत्तेः" इति।

वाचस्पतिकल्पानां वाचस्पतिचरणानां वचनतो विस्पष्टमेव प्रतीयते यत् प्राचीनैर्वृत्तिकृद्भिः 'ब्रह्मणे जिज्ञासा' इति चतुर्थ्यन्तेनैव विग्रहः प्रदर्शितः।

व्याख्यातञ्चैतद्वाचस्पतिवचनममलानन्दाचार्यैः—"चतुर्थीसमासाभावे हेतुमाह—तादर्थ्येति। पाणिनिः किल चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः इति तादर्थ्यसमासं सस्मार। चतुर्थ्यन्तः शब्दस्तदर्थवचनादिभिः शब्दैः समस्यते। चतुर्थ्यन्तशब्दार्थस्तच्छब्देन परामृश्यते। तस्मै इदं तदर्थम्। यथा कुण्डलाय हिरण्यमित्यत्र कुण्डलं चतुर्थ्यन्तशब्दार्थस्तच्छेषो हिरण्यम्, तत्र कुण्डलशब्दश्चतुर्थ्यन्तः, कुण्डलशेषवाचिना हिरण्यशब्देन समस्यते, कुण्डलहिरण्यमिति। तथाऽर्थशब्दादिनापि ब्राह्मणार्थं पयः

इत्यादि द्रष्टव्यम्। कात्यायनेन त्वयं समासः प्रकृतिविकृत्योर्नियमितः, चतुर्थी तदर्थमात्रेणेति चेत्तर्हि सर्वत्र प्रसङ्गोऽविशेषात्, प्रकृतिविकृत्योरिति चेदश्वघासादीनामुपसंख्यानम् इति। एवं चार्थात् प्रस्तुते तन्निषेधसिद्धि-रित्याह—प्रकृतीति। इत्येवमादौ ब्रह्मजिज्ञासेत्येवमादावित्यर्थः। नन्वश्वार्थो घासः अश्वघास इत्यादावप्रकृतिविकारेऽपि तादर्थ्यसमासो दृष्ट इत्याशङ्क्य कात्यायनेनैव समासान्तरमुपसंख्यातमित्याह—अश्वघासादय इति। ननु षष्ठीसमासाभ्युपगमे ब्रह्मणो जिज्ञासाव्यावर्तकत्वेन गुणत्वात् प्रधानपरिग्रह इति भाष्यस्थप्राधान्यभङ्गस्तत्राह—षष्ठीसमासेऽपीति।

अत्रापि प्रथमेंऽशे पाणिनिसूत्रस्य व्याख्यानतः, कात्यायनेन तु इत्यत्र तु-पदप्रयोगतश्च विशेषत एव स्फुटीभवति यत् सूत्रकारमतेन चतुर्थ्यन्तशब्द-स्तदर्थमात्रेण समस्यते, वार्त्तिककारमतन्तु भिन्नमेव।

'परिष्कृतञ्च' कल्पतरुकारव्याख्यानं परिमले—"कात्यायनेन त्विति। चतुर्थी तदर्थमात्रेणेति चेत्, सर्वप्रसङ्गोऽविशेषादिति। यथाश्रुत-सूत्रार्थेऽनुपपत्तिप्रदर्शकमेकं वार्त्तिकम्। सर्वप्रसङ्गः सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण समासप्रसङ्गः, रन्धनाय स्थाली, अवहननायोलूखलमित्यादा-वपि समासः प्रसज्येतेत्यर्थः। विकृतिः प्रकृत्येति चेदश्वघासादीनामुप-संख्यानमिति वार्त्तिकान्तरम्। यदि विकृतिवाची चतुर्थ्यन्तशब्दः प्रकृति-वाचिना समस्यत इति विशेष्यते, तदा सर्वप्रसङ्गः परिहृतो भवति, किन्तु अश्वाय घासः अश्वघास इति समासो न प्राप्नोति, प्रकृतिविकारभावाभावात्, अतस्तत्संग्रहार्थमुपसंख्यानं यत्नान्तरं कर्तव्यमित्यर्थः। एवमश्वघासादिषु चतुर्थीसमास इति वार्त्तिककारमतम्। एतदवलम्बनेनैव धर्माय जिज्ञासा धर्मजिज्ञासेति शबरस्वामिभिश्चतुर्थीसमासः समाश्रितः। कात्यायनेनैवेति। कात्यायनग्रहणमनादरेण शब्दाभियुक्तमात्रोपलक्षणं भाष्यकाराभिप्रायम्। भाष्यकारैः खलु तत्र वार्त्तिकमुल्लङ्घ्य यथाश्रुतसूत्रं समर्थयमानैः षष्ठीसमासः समाश्रितः। अत्रेदं भाष्यकारीयं वार्त्तिकप्रत्याख्यानम्—प्रकृतिविकृति-ग्रहणाय यत्नस्तावन्न कर्तव्यः, सूत्रे बलिरक्षितग्रहणेन ज्ञापकेन तदर्थसिद्धेः।

यदि हि तदर्थसमासस्तदर्थमात्रविषयः स्यात् तदा कुबेराय बलिः कुबेरार्थो भवति, अश्वाय रक्षितम् अश्वार्थं भवति इति कुबेरबलिः अश्वरक्षितम् इति समासयोस्तदर्थसमासविधिनैव सिद्धेः पृथग्बलिरक्षितग्रहणं न कर्तव्यं स्यात्। तत् कृतं ज्ञापयति तदर्थसमासः प्रकृतिविकृतिमात्रविषयः इति। तथा अश्वघासाद्युपसंख्यानयत्नोऽपि न कर्तव्यः, तेषु षष्ठीचतुर्थीसमासयोः स्वर-वैषम्याभावेन षष्ठीसमासोपपत्तेः इति। एवं सूत्रानुसारिभाष्यकारमत-प्राबल्याद् वार्त्तिककारमतमनादृत्य चतुर्थीसमासासम्भव उक्तः। इदमेव भाष्यकारमतमनुसृत्य भट्टपादैर्धर्माय जिज्ञासेति शबरस्वामिवचनं षष्ठीसमास-लब्धार्थिकार्थप्रदर्शनपरम्, न तु विग्रहप्रदर्शनपरम्, तस्य ज्ञातुमिच्छेति निगमनवाक्येन षष्ठीसमासविभावनादिति व्याख्यातम्। आत्मनेपद-परस्मै-पदशब्दयोः प्रकृतिविकारभावाभावेऽपि तादर्थ्यसमासस्तु वैयाकरणाख्यायां चतुर्थ्या इत्यलुग्विधानसामर्थ्यात्। न च तस्मादेव ज्ञापकात् सर्वत्रापि तादर्थ्यसमासः शङ्कनीयः तथा सति बलिरक्षितग्रहणवैयर्थ्यापत्तेरुक्तत्वात्। समासान्तरम् उपसंख्यातमिति। षष्ठीसूत्रविहितं समासान्तरं भाष्यकारै-रङ्गीकृतमित्यर्थः।

परिमलकृतां परिष्कारात् प्रतीयते—

(१) शबरस्वामिभिर्धर्मजिज्ञासास्थले चतुर्थीसमास एव समाश्रितः, भट्टपादैः पुनर्महाभाष्यानुरोधादर्थप्रदर्शनपरतया व्याख्यातः।

(२) कल्पतरुकृदुपवर्णितः सूत्रार्थो महाभाष्यकृतामनभिमतः।

(३) कल्पतरुकारैर्महाभाष्यस्योल्लेखोऽपि न कृतः, परिमलकारैः पुनः पातञ्जलमेव मतं प्रपञ्चितम्।

आत्मनेपदपरस्मैपदविषये यद् वक्तव्यं तदग्रे वक्ष्यते।

इदानीं मूलभूतं वैयाकरणमतमालोच्यते। तत्र प्रथममेव चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २।१।३६ इति पाणिनीयसूत्रस्य वार्त्तिक-भाष्यादीनि विचार्यन्ते। तत्र चादिमं दूषणवार्त्तिकम्—चतुर्थी तदर्थमात्रेण चेत् सर्वप्रसङ्गोऽविशेषात्। व्याख्यातञ्चैतद् भाष्यकृद्भिः—

"किं चतुर्थ्यन्तस्य तदर्थमात्रेण समासो भवति ?

[पाणिनीये लक्षणेऽतिव्याप्तिं पुनरुक्तिं च दृष्ट्वा पूर्वाचार्यन्यासे त्वव्याप्तिं मत्वा विचारः क्रियते किं चतुर्थ्यन्तस्येति। विशेषानुपादाना-द्दोषदर्शनाच्च प्रश्नः।-कैयटः।]

एवं भवितुमर्हति।

चतुर्थी तदर्थमात्रेण चेत् सर्वप्रसङ्गोऽविशेषात्*।

चतुर्थी तदर्थमात्रेण चेत् सर्वप्रसङ्गः सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण सह समासः प्राप्नोति। अनेनापि प्राप्नोति—रन्धनाय स्थाली, अवहन-नायोलूखलमिति।

किं कारणम् ?

अविशेषात्। न हि कश्चिद्विशेष उपादीयते—एवंजातीयकस्य चतुर्थ्यन्तस्य तदर्थेन सह समासो भवतीति। अनुपादीयमानविशेषे सर्वप्रसङ्गः।"

द्वितीयं दूषणवार्त्तिकम्—बलिरक्षिताभ्यां चानर्थकं वचनम्*।

अत्र च भाष्यम्। "बलिरक्षिताभ्यां च समासवचनमनर्थकम्। यो हि महाराजाय बलिः स महाराजार्थो भवति। तत्र तदर्थ इत्येव सिद्धम्।"

अथ चेद्दोषद्वयस्यास्य परिहाराय पूर्वाचार्यमतेन समासोऽयं प्रकृति-विकृत्योर्नियम्यते तथापि न निस्तार इति प्रदर्शनाय प्रवृत्तं तृतीयं दूषण-वार्त्तिकम्—

विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यानम्।

व्याख्यातञ्चैतद् भाष्यकृद्भिः—"यदि पुनर्विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते इत्येतल्लक्षणं क्रियेत।

[ इदानीं पूर्वाचार्यमतं विचार्यते—यदि पुनरिति। ]

विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यानम्*।

"विकृतिः प्रकृत्या" इति चेदश्वघासादीनामुपसंख्यानं कर्तव्यम्। अश्वघासः श्वश्रूसुरं हस्तिविधेति।

भगवता च भाष्यकारेण दूषणत्रितयमित्थं परिहृतम्—

"तत्तर्हीदं बहु वक्तव्यम् । विकृतिः प्रकृत्येति वक्तव्यम् । अश्वघासादीनामुपसंख्यानं कर्तव्यम् ।

न वक्तव्यम् । यत्तावदुच्यते—विकृतिः प्रकृत्येति वक्तव्यमिति, न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति—विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यत इति, यदयं बलिरक्षितग्रहणं करोति ।

कथं कृत्वा ज्ञापकम् ?

यथाजातीयकानां समासे बलिरक्षितग्रहणेनार्थस्तथाजातीयकानां समासः । यदि च विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते न तदर्थमात्रेण, ततो बलिरक्षितग्रहणमर्थवद्भवति ।

यदप्युच्यते—अश्वघासादीनामुपसंख्यानं कर्तव्यमिति । न कर्तव्यम् । अश्वघासादयः षष्ठीसमासा भविष्यन्ति । यद्धि यदर्थं भवति, अयमपि तत्राभिसम्बन्धो भवति—अस्येदमिति । तद् यथा गुरोरिदं गुर्वर्थमिति ।

ननु च स्वरे भेदो भवति । चतुर्थीसमासे सति पूर्वपदप्रकृतिस्वरत्वेन भवितव्यम्, षष्ठीसमासे सति पुनरन्तोदात्तत्वेन ।

नास्ति भेदः । चतुर्थीसमासेऽपि सत्यन्तोदात्तत्वेनैव भवितव्यम् ।

कथम् ?

आचार्यप्रवृत्तिर्ज्ञापयति—विकृतिश्चतुर्थ्यन्ता प्रकृतिस्वरा भवति, न चतुर्थीमात्रमिति, यदयं चतुर्थी तदर्थे, अर्थे, क्ते च इत्यर्थग्रहणं क्तग्रहणं च करोति ।

कथं कृत्वा ज्ञापकम् ?

यथाजातीयकानां प्रकृतिस्वरत्वेऽर्थग्रहणेन क्तग्रहणेन चार्थस्तथाजातीयकानां प्रकृतिस्वरत्वम् । यदि च विकृतिश्चतुर्थ्यन्ता प्रकृत्या भवति न चतुर्थीमात्रम्, ततोऽर्थग्रहणं क्तग्रहणं चार्थवद्भवति ।"

अत्र कैयटः—रन्धनस्थाल्यादयस्त्वनभिधानात् षष्ठीसमासा न भवन्ति । यूपदार्वादिषु चतुर्थी तदर्थ इति स्वरसिद्ध्यर्थं तादर्थ्यमेव सम्बन्धविशेषो विवक्ष्यते न सम्बन्धसामान्यमिति षष्ठीसमासाभावः ।　　( क्रमशः )

# पूर्णत्वं गौरवास्पदम्

[ लेखकः—के. ए. रामलिङ्गशास्त्री ]

'रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ।

'तेनेदं पूर्णं पुरुषेण सर्वम्'......'पूर्णमेवावशिष्यते'

अयि गीर्वाणवाणीप्रणयिनः अवहितिं भवदीयां सादरम् अभ्यर्थयामहे वाङ्मये महनीयेऽस्मिन् ।

जानन्त्येवैतन्ननु प्रियवाचक-कला-कलापिनः सर्वे नः—यदुत सलिल-संपूर्णं सेचनं ( सेकपात्रम् ) न वारि स्रावयति कदापि परितः, तिर्यगनपाव-र्जितं नीयमानं विटपिनिकटं प्रति ; येन केनचित् पुरुष-विशेषेण आरभ्य-माणं किल सकलं कार्यजालं यदा सफलताम् आपद्यते, ननु तदैव सम्पूर्णं तद् भवति नान्यदा ; कविवरेण क्रियमाणं काव्यं समग्रनायकगुणगणवर्णने-नैव सपूर्णताम् इयात् ; वैतानिकाद् वैश्वानरादाविर्भूतेन पायससम्पूर्णस्वर्ण-पात्रकरेण प्राजापत्येन तेजोमयेन पुरुषविशेषेण 'एतत् प्राशय पत्नीस्त्वम्' इत्युक्त्वा समर्पितम् अमृतप्रायं पायसं सकुतूहलादरानन्दातिशयम् अञ्जलिना आदाय दशरथः प्रजाकामः—

'कौसल्यायै प्रथममदिशद् भूपतिः पायसार्धं
प्रादादर्धं प्रणयमधुरं कोसलेन्द्रस्य पुत्र्यै ।
एते देव्यौ तरलमनसः पत्युरालोच्य भावं
स्वार्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम् ।।'

इति श्रीभोजमहाराजवर्णनचमत्कारानुगुणं सुगुणं पुत्रद्वयम् अलभत, सुमित्रा देवी च परिपूर्णमनोरथाभवत् ; एवमेव महाकविः कालिदासोऽपि रघुवंशे वर्णयामास ; तथाहि—

'ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः ।
चरोरर्धार्धभागाभ्यां तामयोजयतामुभे ।।५६।।' ( रघु २० सर्ग )

यद्यपि अयं विभागो न रामायणसंवादी, कुतः ? तत्र चरोरर्धं कौसल्यायै, अवशिष्टार्धं कैकेय्यै, शिष्टं पुनः सुमित्रायै इति अभिहितत्वात्, तथापि, पुराणान्तरसंवादो द्रष्टव्यः ; उक्तं च नारसिंहे—

'ते पिण्डप्राशने काले सुमित्रायै महीपतेः ।
पिण्डाभ्यामल्पमल्पं तु स्वभगिन्यै प्रयच्छतः ॥' इति ;

एवम् अन्यत्रापि विरोधे पुराणान्तरात् समाधातव्यम् इति मल्लिनाथमखीन्द्रोक्तेः ॥ एतद्विभजनानुरूपमेव सुमित्रानन्दवर्धनः सर्वदा रामकैङ्कर्ये व्यापृतचित्तो बभूव ; शत्रुघ्नोऽपि भरतकैङ्कर्ये ; कौसल्यया, कैकेय्या च स्वमात्रे प्रीतिपूर्वकं समर्पितपायसभागयोरानृण्यं कुर्वन्ताविव लक्ष्मणशत्रुघ्नौ यथाक्रमं रामं च भरतं चोपचेरतुः इति ऊह्यम् ; किं च, आदिशेषावतारः खलु लक्ष्मणः, शेषतल्पसुखनिद्रितः किल भगवान् ;

"न च तेन विना निद्रां लभते पुरुषोत्तमः ।
मिष्टमन्नमुपानीतम् अश्नाति न च तं विना ।
यदा हि हयमारूढो मृगयां याति राघवः ॥
तदैनं पृष्ठतोऽन्वेति स-धनुः परिपालयन् ।
भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हि सः ॥
प्राणैः प्रियतरो नित्यं तस्य चासीत् तथा प्रियः ॥' इति ।

श्रीमद्वाल्मीकि-वर्णनात् ; महाविष्णोः शङ्ख-चक्रावतारतया भरत-शत्रुघ्नयोरभियुक्तैः प्रतिपादितत्वात् ;

'समानेऽपि हि सौभ्रात्रे यथोभौ राम-लक्ष्मणौ ।
तथा भरत-शत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः ॥२॥'

इति सूक्तेन कालिदासोऽपि पूर्वोक्तम् आशयं प्रकाशयामास । ईदृश-लोकोत्तरकुमारचतुष्टयप्राप्त्या पिता दशरथः परिपूर्णमनोरथो बभूव ; 'प्रजया हि मनुष्यः पूर्णः' इति श्रुतेः ; अविच्छिन्नधाराभिः पावनीभिर्महानदीभिः सदा आपूर्यमाणोऽपि, 'रत्नाकर' इत्यन्वर्थनामधेयोऽपि स्थलपरिदृश्यमान-

समस्तजन्तु-सम्पन्नोऽपि महार्णवोऽपरिमेयाम् अभिवृद्धिम् आकाङ्क्षन् चन्द्रोदयं प्रतीक्षत इति माघकविरवर्णयत्—

'तृप्ति-योगः परेणापि महिम्ना न महीयसाम् ।
पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥'

इति नीतिपद्येन ;

'तातः स्ववाचा व्यवहृत्य हृद्यं वत्साभिषेकोत्सव-मङ्गलं मे ।
प्रणाम-संज्ञस्य मयाऽर्पितस्य किं पूर्ण-पात्रस्य न पात्रमासीत् ॥'

इति सूक्तेन रामभद्रः कैकेयीं बोधयति—मम तात-पादाः स्व-वचनेनैव मनोहरं भरताभिषेकोत्सवमङ्गलं मह्यं कथयित्वा, तदात्व एव सकुतूहलं मया समर्पितस्य प्रणाम-नामधेयस्य पूर्ण-पात्रस्य कुतो नु नाम पात्रं नासन्निति मया शोच्यत इति ;

'उत्सवादिषु यद् देयं पूर्णपात्रं तदुच्यते' इति अभियुक्ताः ।

'अवभृथेऽवसिते सरयू-तटाद् अथ यथायथमुच्चलिते जने ।
दशरथः परिपूर्ण-मनोरथः पुरमगात् पुरुहूत-पुरोपमाम्'

इति सूक्त्या, पङ्क्तिरथः पावने सरयू-तटे अश्वमेध-पुत्रकामेष्ट्यादिकं परिसमाप्य, विरचितावभृथस्नानः तत्तादृशेषु महाशयेषु स्व-स्वदेशम् अभिप्रयातेषु, स्वयमपि परिपूर्णमनोरथः प्रविवेश अमरावतीसध्रीचीम् अयोध्याम् इति निर्दिश्यते ; रघुवंशे इन्दुमती-स्वयंवरघट्टे अजमहाराजप्रस्तावोपोद्घात-रूपेण दिलीप-भूपपौरुषप्रभाववर्णने षष्ठसर्गे—

'जातः कुले तस्य किलोरुकीर्त्तिः कुलप्रदीपो नृपतिर्दिलीपः ।
अतिष्ठदेकोन-शतक्रतुत्वे शक्राभ्यसूया-विनिवृत्तये यः ॥७४॥'

इति पद्येन हृद्येन, क्वचित् अपूर्णत्वस्यापि कार्यविशेषकारित्वेन चाकचक्याधायकत्वं कविसार्वभौमेण उपवर्णितम् । अजमहाराजस्य पितामहः किल दिलीपः सङ्क्रन्दनस्य सार्वकालिकसख्याभिवाञ्छया, एतदीयाभ्यसूयाविनिवृत्तये, क्रतुनैकेन अपूर्णान् नवाधिकनवति-संख्याकान् ९९ अश्वमेध-संज्ञकान् यज्ञान् अयजिष्ट इति विशदं प्रतीयते ;

'लोकान्तरसुखं पुण्यं तपो-दान-समुद्भवम् ।
सन्ततिः शुद्धवंश्या तु परत्रेह च शर्मणे ॥'

इति सुभाषितेन, 'प्रजया हि मनुष्यः पूर्णः' इति श्रुत्यर्थं करतलामलकवच्च श्लक्ष्णतया अवबोधयति कविसार्वभौमः ।

'सगुणा सालङ्कारा समुचित-विच्छित्ति-वृत्ति-रीतिरसौ ।
प्रस्तुत-रस-सन्दोहा सरस्वती जयति कालिदासस्य ॥'

———

## ग्रन्थनिकषः

**चरकसंहिता**—शारीरस्थाने प्रथमोऽध्यायः। भिषगाचार्य-श्रीज्योतिषचन्द्रसरस्वतीसांख्याचार्येण विरचितया चरकदीपिकया नाम टिप्पण्या समलङ्कृतः। २९।३ ग्रे ष्ट्रीट् कलिकातातः श्रीषोडशीकुमार-सरस्वती एम्. ए. इत्येतेन प्रकाशितः। मूल्यं पादोनरूप्यकम्। विद्यार्थिनां पादहीनं तदेव।

मानवहितैषणायां दत्तावधानैर्महर्षिभिः कृतानि यानि तावदैहिकामुष्मिकफलानि शास्त्राण्युपलभ्यन्ते, तेषु वैद्यकमेवाद्यत्वे प्रत्यक्षं फलमुपदर्शयतीत्यस्याविसंवादि प्रामाण्यं नास्तिकशिरोमणयोऽपि नाम नापह्नुवते। अत एवास्तिकाः शास्त्रमिदं दृष्टान्तीकृत्याप्रत्यक्षफलानामपि शास्त्रान्तराणां प्रामाण्यमनुमिमते। कालप्रभावात् पाश्चात्त्यचिकित्साविज्ञानस्यातिप्रसारात् संसारिणां परमो बन्धुरयमायुर्वेदो मन्दप्रयोजनः संवृत्त इति खिद्यते हृदयं सहृदयानाम्। अत्र चाप्रतिविधेये कालप्रभावे अस्वतन्त्रतायास्तन्त्रत्वेऽपि आयुर्वेदमनुशीलयतामाधुनिकचिकित्सकानामध्येतव्येषु ग्रन्थेषु श्रद्धाविरहः श्रमवैमुख्यञ्च न कारणमित्यपि नैव सावधारणं वक्तुमर्हामः। स्वोपजीव्येषु विषयेषु सर्वथा सर्वैरेव श्रद्धालुभिर्भवितव्यम्, अन्यथा—

"आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति ।
न तस्माद् विन्दते क्षेमं जारं नार्यसती यथा ॥"

इत्यवितथमार्षभाषितमशुभमेव तेषां सूचयेत् । वैद्यकेषु चेदानीमुपलभ्यमानेषु चरकसंहितैव प्राचीना प्रधाना चेति बहव एव प्रतियन्ति । तामेतां संहितामंशतोऽपि प्रकाशयितुमुपक्राम श्रीमान सरस्वतीमहोदयः समेषामेव नः प्रशंसापात्रमभूदित्यत्र नास्ति संशयलेशोऽपि ।

यद्यप्यध्यायेऽस्मिन यां वयं चिकित्सां ब्रूमस्तामधिकृत्य विशेषेण कोऽपि प्रबन्धो नास्ति, केवलमायुर्वेदस्य दार्शनिको भाग एव विशदं विवेचितस्तथापि सूत्रभूतोऽयं संहिताया इति भिषज एवास्य व्याख्यानादिविधौ मुख्याधिकारितेत्यकामैरप्यभ्युपगन्तव्यम् । ततश्च प्रवीणेन भिषजा दार्शनिकेन च श्रीमता सरस्वतीमहोदयेन यदत्रावधानमधिरोपितं तेनास्य सर्वाङ्गसुन्दरतायामसन्देहा वयमानन्दतुन्दिलतामभिविन्दामः । ग्रन्थेऽस्मिन "कतिधा पुरुषो धीमन" इत्यादयस्त्रयोविंशतिः प्रश्नाः सममुत्तरैर्यथायथं सन्निवेशिता इत्यध्यायोऽयं 'कतिधापुरुषीय'त्वेन व्यपदेशमलभत ।

श्रीमता सरस्वतीमहोदयेनोपोद्घातादाटिप्पणम् "मतमिदं साङ्ख्यीयमीश्वरकृष्णोपज्ञात साङ्ख्यमताद् विलक्षणञ्चे"ति प्रतिपादयितुम् आरचिता महत्यारभटी । उक्तञ्चोपोद्घाते—"अव्यक्तादिपदसाम्येन प्राञ्चो व्याख्यातारो यथा कथञ्चिदत्रापीश्वरकृष्णसम्मतमेव साङ्ख्यदर्शनं प्रतिविपादयिषन्ति, तेन च क्वचित सुगमोऽपि मूलश्लोको दुर्बोधः, क्वचित पूर्वापरविरोधः क्वचिच्च स्वतन्त्रसिद्धान्तो न्यक्कृतः" इति । विषीदामस्तावत प्राचो व्याख्यातॄनाक्षिप्रतां सरस्वतीमहोदयानामनेनोपक्षेपेण । प्राचीनभावेषु श्रद्धानमेव तं वयमभिजानीमः, तथाविधस्य तस्यैवं लेखः खेदयिष्यत्येव मानसमतीतेष्वादरवताम् । तिष्ठतु तावत्तदीयोपक्षेपस्य साध्वसाधुत्वविचारप्रवृत्तिः, सामान्यतस्त्विदमपि वक्तुं शक्यते—अस्त्विदं मतं साङ्ख्यीयमन्यद् वा, अस्तु वेश्वरकृष्णमतविलक्षणम्, किं तेन गतमायातं वा चिकित्साशास्त्रप्रणेतुः श्रीमतश्चरकस्य । 'यत्परः शब्दः स शब्दार्थः'

इति न्यायाचिकित्सायामेव तस्य तात्पर्यं न पुनर्दर्शननिर्णय इति तेन स्वसिद्धान्तोपयोगितयोपन्यस्तं मतं मतान्तरमनुप्रविशतु वा न वेति नैतदालोचनपदवीमधितिष्ठति। अनयैव युक्त्या प्राञ्चो व्याख्यातारोऽपि यद्यन्तरेण कामपि मतान्तरानुवृत्तिं विवृतौ प्रावर्तन्त, किमु तानेवमेकान्ततो दोषेण द्रष्टुमर्हामः?

अन्ते चेदमभिधीयते—विनापि प्राचां टीकाकृतामधिक्षेपं शक्यमासीत् सरस्वतीमहोदयेन स्वमतमुपस्थापयितुमिति किमित्ययथा महतोऽपभाषणेनात्मनः पीनीकृतमेनः प्रतिरुद्धा च प्राचीनभावानुपातिन्यात्मनः श्रद्धा। यच्चात्र भिषग्वरः सरस्वतीमहोदयः स्ववैदुष्यसाक्ष्येण भृशं कृशशरीरां विवृतिमायोजितवान्, तेन तादृशानां विदुषामसत्यप्यसौकर्ये प्रथमपाठार्थिनां पुनः पर एव विपत्पारावारः प्रतिभनत्स्यति पाठप्रवृत्तिमिति जानीमः। मनोरमं मुद्रणम्, मनोरमाऽक्षरपंक्तिः, मनोरमाण्यायतिमन्ति च पत्राणीति क्रियतामस्य संग्रहः साङ्ख्योपाधिपरीक्षायामितः परम् (इं १९४०) उत्तितीर्षुभिश्छात्रैः।

श्रीउपेन्द्रमोहनसांङ्ख्यतीर्थः

**काशीदासीय-महाभारतम्।** खण्डद्वयात्मकम्। वि. ए. कविभूषण-काव्यरत्नोद्भटसागरोपनाम-श्रीयुक्त-पूर्णचन्द्र दे-महोदयेन संवर्द्ध्य संशोध्य च विचित्रचित्रादिसाहित्येन सम्पादितम्। तच्च एलाहाबादस्थित-इण्डियान् प्रेस लिमिटेड्" इत्यतस्तत्कर्तृपक्षैः प्रकाशितम्। प्राप्तिस्थानम्—कलिकातान्तःपाति २२।१संख्यक-कर्णओयालिश्-वर्त्मस्थितं "इण्डियान् पाव्लिशिं हाउस्" इत्याख्यं भवनम्। मूल्यं-रूप्यकसप्तकम्।

सुविदितमिदं विपश्चिद्वर्याणां यद् वङ्गेषु काशीदासीय-महाभारतं नाम किमपि महाभारतं सुचिरं प्रचरति। तच्च वेदव्यासविरचितस्यैव संस्कृत-महाभारतस्य वङ्गभाषामयमनुवादप्रायं प्रतिरूपमिति। अनुवादरूपमपीदं रचनामाधुर्येण भावगाम्भीर्येण यथोचितैर्विभवान्तरैश्च मल-

महाभारतात् कथमपि न्यूनतां नावहतीति जितं तत्रभवता काशीदासकृतिना। यस्य श्रवणपठनाभ्यामवकाशकालमतिवाहयन्ति जनाः सुनिपुणं वङ्गेषु, यस्य च पूजामद्यत्वेऽपि केचित् सन्ध्यावन्दनादिवदविधाय नापोऽपि स्पृशन्ति, यस्मिंश्च सर्वतथ्याकरत्वाद् "यन्नास्ति भारते तन्नास्ति भारते" इति वादविशेषोऽपि सुसङ्गतः। एवं धर्मैकप्राणानां मूर्तिमतो धर्मस्येव तस्यै-तस्य महाभारतस्य तादृशं किमपि संस्करणं दृष्टिपथं नातिक्रान्तमितःपूर्वं कदाचित्, यस्मिन् भ्रमप्रमादादयो विशेषतः सुदुर्लभा आसन्। यद्यपि बहोः कालात् प्रभृति कलिकातास्थ "वटतला"नामकस्थानात् स्थानान्तरे-भ्यश्चास्य प्रभूतः प्रचारः परिलक्षितः, तथापीदमतीव दुःखावहं यत् तैस्तैः प्रकाशकैर्धर्मस्य उपचिकीर्षुभिरपि प्रायेण "यद् दृष्टं तल्लिखितमि"ति पन्थानमवलम्बमानैरपकार एव प्रत्युत संसाधितो धर्मस्य। किं बहुना, उक्तरीत्या प्रकाशयद्भिस्तैर्ग्रन्थकर्तुराशयाभिव्यक्तावपि स्थलविशेषे कुठाराघात इव कृतः परिलक्ष्यते। परन्त्वयमस्माकमाशालोकोऽधर्मगहनेऽप्यस्मिन् कलौ काले यन् सम्प्रति सहृदयाग्रगण्य-श्रीयुक्त-पूर्णचन्द्र-दे-महोदयैरिदं सम्पादनेन प्राकाश्यमनायि सुसंस्कृततयेति।

अस्मिन्नभिनवे संस्करणे कविभूषणमहाभागैर्देशविदेशेभ्य आहृत्या-हृत्य प्रायेणाष्टाविंशत्यधिकं शतं पुस्तकानि पर्यालोचयद्भिः पाठस्तद्व्याख्यादौ उपाख्यानभागस्य न्यूनाधिकत्वसन्निवेशने च प्रयत्नविशेषैः स्वीकृतः। स्थल-विशेषे च प्राचीनरीत्या व्यवहृतानां दुरूहार्थानां मौलिकशब्दानामर्थप्रकाशने ग्रन्थप्रतिपाद्यानामैतिहासिकविषयाणाञ्च विश्लेषणे समधिकं परिश्रमः प्रदर्शितः। मुनीनाञ्च मतिभ्रमः का कथा साधारणानामिति सम्भव-दोषमपि संस्करणमिदं प्रचरद्रूपाणां महाभारतानां श्रैष्ठ्यमर्हति समी-चीनतायामित्यत्र कः संशयः। सौष्ठवपक्षेऽपि कागदानां चित्राणा-मक्षराणाञ्च सम्पादकैस्तथा तथा योजिततया सर्वाङ्गसुन्दरमिदं दूरतोऽपि प्रेक्षमाणानां समावर्जयति सन्तोषविशेषेण मनांसि सहृदयानामिति तिरस्करोत्येव प्रचरद्रूपाणि भारतान्तराणि। अतो मन्ये येऽस्य

भूयसा प्रचारः स्यात् तदैव सफलो भवेत् परिश्रमः सम्पादकस्येति। अन्ते चैवं कामये यदितराण्यपि कर्माण्येवं सुमहान्ति साधनीयानि तत्र भवता सम्पादकेन सुचिरमायुषा अवियुज्यमानेनेति शिवम्।

श्रीरामधन-काव्यव्याकरणतीर्थः

---

# गीर्वाणभाषाभिवर्धिनी सभा

भो! भो! महाशयाः, गीर्वाणभाषाभिवर्धिनीसभासहृदयाः!

विदितमेव तत्रभवतां भवतां यन्मृतप्रायेयं गैर्वाणी वाणीति सर्वत्र जोघुष्यते इति। इदन्तु विस्मयावहं, यदनाघ्रातमरणधर्मगन्धां विबुधाभिनन्दितामममन्दाः केचनाविमर्शका मृतां व्याहरन्तीति। अस्या भाषायास्त्वमृतत्वे तावदस्मदनुभव एव निदानम्। यच्चिरन्तना महाकवयोऽपि सतीष्वपि तत्तद्देशानुगुण्येन बह्वीषु भाषासु भङ्गुरतया भाषान्तरमन्तरा स्वार्जितयशःस्थैर्यकामनया व्यरचयन्ननयैव मरणधर्मवर्जितया सर्वत्र प्रसरणशीलया देववाण्या काव्यानि। महाकविना भवभूतिनाऽपि सुष्ठु प्रकाशितम् अमृतत्वमस्याः, "अमृतामात्मनः कलाम्" इति।

तदिदानीं जगति विततां मृतभाषेति मिथ्याप्रथां प्रमार्ष्टुकामैरत्रत्यैर्देववाणीविवर्धनैकतानैः अत्र (MELKOTE, MYSORE STATE) वेदवेदान्तबोधिनीसंस्कृतमहापाठशालायां परिकल्पिता काचित्सभा "गीर्वाणभाषाभिवर्धिनी"ति।

अस्यास्त्वष्टमवार्षिकमहोत्सवो बहुधान्यवत्सरे श्रावणशुक्लपञ्चम्यां (३१-७-१९३८) प्रवर्तितः। तदात्वे पाठशालाध्यक्षैर्महाविद्वत्-ति-अ-ऐम्बेरुमनार्यमहोदयैः प्रार्थिता महीशूरसंस्थानसंस्कृतपाठशालानिरीक्षका

योगनरसिंहमहाशयाः M. A; सभाध्यक्षपीठमलंचक्रुः। तदनु तदनुमत्या स्वागतश्लोकपठनानन्तरं भगवत्प्रार्थनापुरस्सरं सभावार्षिकवृत्तमपि प्रचलितम्। अथ शालाध्यापकैः साङ्ख्यतीर्थ-वेदान्तविद्वानिति बिरुद-भाग्भिः जग्गु-वेंकटार्यैः "सर्वेष्वपि कर्मसु शास्त्रमेव प्रमाण"मिति विषयमधि-कृत्योपन्यस्तं किञ्चन भाषणम्। श्रीसुब्रह्मण्यशास्त्रिभिश्च "यथा कथंचित्, भाषान्तरेष्विव सर्वैस्संस्कृतभाषायामपि दृष्टिर्देया" इत्यस्मिन्विषये भाषणम् उपान्यस्यत। ततो महानाटकवीणा श्रुतिसुभगं ति-तिरुमलार्यैर्वादिता।

ततश्च सभाध्यक्षैरुपन्यस्तम्। अहं तावद् अतीवाभिनन्दामि सभा-मिमाम्। यतः पाठशालान्तेवासिभिः सादरं प्रवर्त्यमाना, विदुषामानन्द-जननी, प्रसूतयोगिनीपत्रिकापुत्रिका, परिहृतगीर्वाणवाणीमृतत्वमिथ्याप्रथा, प्रथिता वरीवर्ति। एवमेव सर्वेऽपि अमरवाणीपोषणरतास्त्यक्तान्यशुभ-द्वेषाश्चिरन्तनहृदयंगमविस्मयावहभावसम्भारसम्भृतश्राव्यदृश्यकाव्यरसास्वाद-सुहिता भवन्त्विति भगवति यदुशैलशिखरशेखरे नारायणे सप्रश्रय-मभ्यर्थये"। इति—

रात्रौ नवघण्टावादनानुपदमेव पाठशालाविद्यार्थिभिः,—जग्गु-वकुल-भूषणैः कविवरैः शालासाहित्याध्यापकैः वेणीसंहारस्य नाटकस्य पूर्ववस्तुतया प्रणीतं "अद्भुतांशुकम्" नाम नाटकम्—अभिनीय सभ्यानां हृदयमावर्जितम्।

अनुपदमेव रूपकाभिनेतारो विद्यार्थिनो रूपकवीक्षणविस्मितमानसैः सभाध्यक्षैरेवमभिनन्दिताः। "शालासु कलाविज्ञानमावश्यकम्। सर्वत्रैव-मेव वर्तते। संस्कृतशालासु परं विरलतयेदं दृश्यते। एवमपि, अत्रत्या अन्तेवासिनः संस्कृतरूपकाभिनयेन यत् कलानैपुण्यं साधु प्राकाशयां-स्तदतितरां प्रमोदावहमिति।

सभाकार्यदर्शी

MELKOTE
D. 22-8-1938

संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| November, 1938 | १८६०-शकीये कार्तिके २१श-वर्षस्य ७म-संख्या | Vol XXI, No. 7 |
|---|---|---|

# अद्वैतमतम्

[ स्वनामधन्य-जगद्गुरु-श्रीशङ्कराचार्य-श्रीकाञ्चीकामकोटीपीठाधीशानाम् ]

आदौ श्रीमन्त आचार्यचरणा अद्वैतसिद्धान्तं व्यवास्थापयन । तस्याद्वैतसिद्धान्तस्य ज्ञापकेषु निबन्धेषु प्रधानानि त्रीणि प्रस्थानानि । तानि तु 'गीताभाष्यम्,' 'उपनिषद्भाष्यम्,' 'ब्रह्मसूत्रभाष्यं' च । इमानि त्रीण्यपि अद्वैतसिद्धान्तस्य मुख्यान्यवलम्बनानि । एतैस्साकं बहूनि प्रकरणान्याचार्यपादा व्यरचयन । तेषु मुख्यानि 'विवेकचूडामणिः' इत्यादीनि । तैस्सह—शिवस्तोत्रम् विष्णुस्तोत्रम् अम्बिकास्तोत्रम् इत्यादीन् बहुविधान् निबन्धानपि व्यलिखन् । प्रपञ्चसारं नाम कंचन मन्त्रशास्त्रनिबन्धमपि विरचयन्ति स्म ।

आचार्यपादरचितानां निबन्धानां पण्डितप्रवरा बहवो व्याख्यानमलिखन । आचार्यकृतिषु प्रधानतमं सूत्रभाष्यम् । तत्तु बादरायणमहर्षिणा कृतानां ब्रह्मसूत्राणां व्याख्यानमेव । तेषु ब्रह्मसूत्रेषु दशसूपनिषत्सु प्रतिपादिता विषया वर्तन्ते । तेषां विषयाणां सारः सूत्ररूपेण तत्रोपपादितोऽस्ति । तानि दशसूपनिषत्सु प्रतिपादितानर्थान् कथं प्रतिपादयन्तीत्येतद्विस्तरेण प्रति-

पादनमेव भाष्यं नाम। तस्य भाष्यस्यैतद्दिनपर्यन्तं बहवो व्याख्यानं कुर्वन्तिस्म।

आचार्यपादानां मुख्यान्तेवासिनः पद्मपादाचार्याः पञ्चपादिकां नाम काञ्चिद् व्याख्यां व्यरचयन्। तस्या विवरणाचार्या नाम किंचिद्विवरणमकुर्वन्, तस्य तत्त्वदीपनं नाम विवरणमेव। एवं व्याख्यानप्रस्थानमेकमस्ति।

आचार्यपादानां भाष्यस्यौत्तराः केचन वाचस्पतिमिश्रा नाम भामतीनाम्ना कांचन टीकामकुर्वन्। तस्या अमलानन्दा नाम केचित् कल्पतरुं नाम व्याख्यामरचयत्। कल्पतरोरप्पय्यदीक्षितचरणाः परिमलं नाम विवरणं कृतवन्तः। तस्याः कल्पतरोरेव कोट्टयूरलक्ष्मीनारायणवाजपेयिनः आभोगं नामैकं व्याख्यानं रचितवन्तः। इयमेका परम्परा।

सूत्रभाष्यस्यैव रामानन्दा नाम रत्नप्रभाख्यामेकां व्याख्यामकुर्वन्। तस्या अप्येका टीका वर्तते।

तस्य सूत्रभाष्यस्यैव आचार्यपादानामन्तेवासी आनन्दगिरिर्नामापरमेकं व्याख्यानमरचयन। तस्यानन्दगिरीयमिति नाम। मा किं १५० वत्सरेभ्यः पूर्वं त्र्यम्बकभट्टाचार्या नाम भाष्यभानुप्रभां नाम भाष्यस्यैकं व्याख्यानं विरचयन्तिस्म। महाराष्ट्रदेशीयो रघुनाथसूरिर्नाम भाष्ये केषांचन पादानां शङ्करपादभूषणं नामैकं विवरणमकुर्वन्। एकस्य निबन्धस्यैतावन्ति विवरणानि वर्तन्ते।

दशोपनिषत्सु बृहदारण्यकस्य तैत्तिरीयस्य च सुरेश्वराचार्या वार्तिकं नाम किञ्चिद् भाष्यमाश्रित्य लिखितवन्तः। तेन तेषां वार्तिककारा इति नाम वर्तते।

भगवद्गीतायाः श्रीमदाचार्यपादकृतमेकं भाष्यं वर्तते। तदनुसृत्य दश व्याख्यानानि वर्तन्ते—सर्वाणीमान्यद्वैतसिद्धान्तस्य ज्ञापका निबन्धाः। एवमेव द्वैतसिद्धान्तो नाम कश्चन। पूर्वोक्तानां ब्रह्मसूत्राणां पश्चिमदेशीयाः श्रीमध्वाचार्या द्वैतसिद्धान्तरीत्या किञ्चिद् भाष्यं रचयन्ति स्म। तस्यापि बहवो व्याख्यानं लिखितवन्तः। तेषु व्याख्यानेषु अद्वैतसिद्धान्तपरान्

निर्णयान् प्रतिरुद्ध्य ते लिखितवन्तः। ४०० वत्सरेभ्यः प्राक् न्यायामृतं नाम कश्चन निबन्धोऽद्वैतसिद्धान्तानां खण्डनेन लिखितः। तस्य निरसनेन मधुसूदनसरस्वत्यो नामाद्वैतसिद्धिं नाम निबन्धं रचितवन्तः। तदनुचितमिति द्वैतसिद्धान्तपक्षे तरङ्गिणी नाम कश्चन निबन्धो लिखितः। तस्यास्तरङ्गिण्याः खण्डनेन गौडदेशीया ब्रह्मानन्दा नाम केचन महान्तश्चन्द्रिकां नाम कञ्चनं ग्रन्थं व्यलिखन्। स गौडब्रह्मानन्दीय इति प्रसिद्धिं गतः। तस्य ग्रन्थस्याक्षेपेण द्वैतसिद्धान्तमनुसृत्य वनमालामिश्रा नाम वनमालामिश्रीयं व्यलिखन्। भाष्यभानुप्रभालेखकास्त्र्यम्बकभट्टाचार्या नाम तं ग्रन्थं निरस्य सिद्धान्तवैजयन्तीं नाम कंचन निबन्धं लिखितवन्तः।

पूर्वोक्तस्य गौडब्रह्मानन्दीयस्य निरसनेन षष्टिवत्सरेभ्यः प्राक् विशिष्टाद्वैतसिद्धान्तरीत्या अनन्ताचार्या नाम्ना केचन न्यायभास्करं नाम किञ्चित् पुस्तकमलिखन्। तस्य न्यायभास्करस्याक्षेपेणाप्पय्यदीक्षितवंशेऽवतीर्णा महामहोपाध्याय-श्रीराजुशास्त्रिणो नाम न्यायेन्दुशेखराख्यं ग्रन्थं लिखन्ति स्म। एवं द्वैतरीत्या अन्ततः खण्डनं सिद्धान्तवैजयन्ती वर्तते। विशिष्टाद्वैतसिद्धान्तस्य खण्डनं तु न्यायेन्दुशेखरो वर्तते। एतयोरुभयोः पर्यवसन्ना खण्डनपरम्परा। इतः परमियं वर्धेतेऽपि, यदि वर्धेत। यः कोऽपि खण्डनं लिखति चेदपि तत् सर्वेऽपि समालोचयितुमर्हन्ति। तेषां पठनेन विषयपरिशुद्धिः स्यात्। अभिप्रायभेदो भवति चेदेव परिशुद्धिर्नाम संभवेत्। अस्माकं देश एकस्मिन् मतेऽभिज्ञा इतरमतग्रन्थानपि जानन्तीति संप्रदायः।

एतावन्ति पुस्तकान्यस्मन्मतसम्बद्धानि वर्तन्ते। तानि न वयं पठामः। देशान्तरीयपुस्तकानां नामानि अस्माकं बहूनि ज्ञायन्ते। किं पुस्तकमस्माकमवलम्बनमिति न ज्ञायते अस्माकमसम्बद्धानि पुस्तकानि भारभारान् जानीमः, अस्माकं तु पुस्तकं न ज्ञायते। नामापि ज्ञायते चेत् किञ्चिदिव श्रद्धा स्यात्। शास्त्रज्ञा वक्तुमागच्छन्ति चेत् श्रोत्रं दत्त्वा न श्रूयते। अश्रद्धां कुर्महे। अस्माकं देशो हीनायां स्थितौ वर्तते। अस्मद्देशीयामात्मविद्यां देशान्तरीयाः प्रशंसन्ति। लोकेऽस्माकं गौरवं यद्यपेक्ष्यते, तर्हि अस्माकं देशस्य यादृशं

वस्तुसद् गौरवमासीत्, तद् वर्धयितुमर्हामः। अस्माकं देशस्य किं गौरवम्? अत्रासंख्येया महान्त आत्मानन्दमलभन्तेत्येतदेव। तस्य गौरवस्य मूलकारणान्यविज्ञायैव वर्तनमत्यन्तमेव नीचमेव कार्यम्।

एतावत्कालमद्वैतसिद्धान्तनिबन्धानां क्रममवदम्। किं नाम तदद्वैतम्? किं प्रयोजनमस्माकम्? किं तदस्माकं ज्ञातुं शक्यते, उत न? प्रयोजनं लब्धुमर्हामो न वा? सर्वाणीमानि कथ्यमानानि तथ्यानि वा? अनुभवारूढं किं प्रयोजनं स्यात्? इतीमान्यालोचयामः।

को नामार्थोऽद्वैतस्य पदस्य? द्वितीयो नास्तीत्येतदेव तस्यार्थः। द्वितीयो नास्तीति नास्माकं तथ्यं प्रतिभाति; सहस्रसंख्याकानि वस्तूनि वर्तन्ते। तथा द्वितीयो यदि नास्ति, तर्हि अस्माकं को नाम लाभः? तेनैव खलु वयं यदर्थं प्रयतामहे, तद्धस्तगतं भवेत्। वयं किमर्थं सक्लेशं प्रयतामहे? अस्माकमापतन्तः सर्वेऽपि क्लेशा निवर्तेरन् इति वयं प्रयतामहे। सा क्लेशनिवृत्तिरनेनाद्वैतेन समापतेत्। दारिद्र्यम्, क्षुधा, अवमानः, व्याधिः, व्यवहारः, मनस्तापः इत्यादीनि निवर्तयितुं वयं क्लेशमनुभवामः। कस्मिन्नपि ग्रामेऽयं क्लेशो नास्तीति वर्तते वा? न वर्तते। परं तु वयं दुःखनिवृत्तये प्रयतमाना एव वर्तामहे। अस्माकं लौकिकेन प्रयत्नेन तात्कालिकी शान्तिरेव भवति। एका व्याधिरौषधदानेन शाम्यति चेत्, अपरा व्याधिरापतति। एतादृशान् क्लेशान् निवर्तयितुमुपायोऽद्वैतं नाम, अनेन क्षुधा, व्याधिः, मरणम्, अवमानः, व्यवहारः, कोपः, दारिद्र्यम् इत्यादीनि न पुनरायास्यन्ति।

वयं कुतो दुःख्यामः? दारिद्र्यम्, क्षुधा इत्यादीनि सर्वाणि नास्माकं यदि वर्तेरन्, समीचीनमेव। परं तु कुतस्तानि समापतन्ति? तेषामागमनस्य मार्गः क इति विमृशामः। क्षुधा व्याधिरित्यादिभिरस्माकं दुःखमाविर्भवति, इमानि तु यावच्छरीरमवतिष्ठेरन्। इदं शरीरं यदा नश्यति, अपरं शरीरमागच्छति। तस्यापि शरीरस्य क्षुधा, पिपासा, व्याधिरित्यादीनि सर्वाणि समापतन्ति। इत्थं च यदि यथा न शरीरं पुनरा-

वर्तते तथा कुर्याम्, तर्हि नास्माकमिमानि दुःखानि समापतेयुः। बहूनि जन्मान्यस्माकमापतन्ति। किं सर्वेषां तेषां जन्मनां कारणम्? शरीरं कुतः समापतति? पूर्वस्मिन् जन्मनि कृतानां पुण्य-पापानां फलानि वयमनुभवितुमर्हामः। आत्मा नानुभवितुमर्हति। आत्मानं वह्निना दग्धुं न पारयामः, चन्दनस्य लेपनेन न शीतयितुं शक्नुमः, तत एकशरीरमपेक्ष्यते। अस्माभिः कृतानां पुण्यपापानां फलरूपेण भगवान् अस्माकं शरीरं प्रदाय तदेव 'अहम्' इत्यभिमन्तुमपि कारयित्वा दण्डयति। यदि कश्चन बालकः कंचनापराधं करोति, तदर्थं तस्मै कशाताडनं ददते, समीपे चिकित्सको वर्तते। यदि स बालकः सोढुमशक्त्या मूर्च्छितो भवति, तर्हि चिकित्सयित्वा पुनरपि ताडयति। भोजनं दत्त्वा पुनरपि ताडयति। समीचीनां चेतनामुत्पाद्य पुनरपि ताडयति; ईश्वरस्त्वस्माभिः कृतानां पापानां कृते शरीरं दत्त्वाऽस्मान् शिक्षयति। यदि न पर्याप्तम्, तर्हि पुनरपि शरीरं प्रदाय शिक्षयति। ततोऽस्माभिः क्रियमाणं पापमेव जन्मनः कारणम्। इतः परं यदि न पापं करिष्यामः, तर्हि न शरीरमावर्तेत। पापं न कर्तव्यमिति भावनया प्रत्यहं स्थातव्यम्।

पुण्यपापानां किं कारणम्? तान्यकृत्वापि वर्तयितुमिच्छा तु वर्तते, परं तु न शक्यते। कंचन वृक्षं यदि नाङ्कुरयितुमिच्छामः, तर्हि शाखाच्छेदनमात्रेण न तत् पार्यते, वृक्षमूलमेवोन्मूलयितव्यम्। एवमेव पापस्य कारणं विज्ञाय तदेवोन्मूलयितव्यम्। दुष्टानां कर्मणां फलं पापम्। दुष्टं कर्म कुतः कुर्महे? किमपि वस्त्वपेक्षितमित्याशाऽस्माकं वर्तते। तत् प्राप्तुं तिरश्चा पथा गच्छामः। तदेव पापम्। पापस्याचरणे कारणं कामः। यदि किञ्चिद् वस्तु सुन्दरं प्रतिभाति, तर्हि काम उदेति। सुन्दरपदार्थानां दर्शनेऽपेक्षिता इति काम उद्गच्छति। तत् सुन्दरमिति ज्ञानमिच्छामुत्पादयति। तामिच्छां पूरयितुं कर्माणि कुर्महे। यद् इन्द्रियाणि किञ्चन सुन्दरमिति जानन्ति, तदेव कामस्य कारणं नाम। प्रयतनेनेच्छामुत्पा-

दयितुं शक्नुमः, परिवर्तयितुमपि शक्नुमः। ज्ञानं तु नोत्पादयितुं शक्नुमः न परिवर्तयितुमपि पारयामः।

अस्माभिः क्रियमाणस्य पापस्य शरीरमेव दण्डः, इति तस्य पापस्य कारणं कामं यदि निवर्तयेम, तर्हि दुःखनिवृत्तिः स्वत एव भवेत्। स कामः कथं निवर्तयितुं शक्यते? कथमिदं दुःखं निवर्तयितुं शक्यते? इति इतराणि शास्त्राणि पन्थानमप्रदर्श्यैव पर्यत्यजन्। वेदान्तस्तु न तथा पर्यत्यजत्। वेदस्य शिरोरूपो वेदान्तोऽस्या दुःखनिवृत्तेस्समुचितं मार्गमुपदिशति। कामः क्रोधश्चास्माकमन्यस्मिन्नेव वस्तुन्युदितः। अस्मास्वेवास्माकं कामः क्रोधश्च नोदितः। अन्यस्मिन्नेव वस्तु कामो यत उदेति, ततस्तान्यप्यस्मानेव यदि कुर्मः, तर्हि न स उदियान्। अस्मत्तोऽपि पृथक् किमपि यथा न स्यात्, तथा सर्वमपि अस्मानेव यदि कुर्महे, तर्हि कामो नाम न समुदियात्। आशाया अभावे न प्रयतनं नाम, तेन तु न पापं नाम, असति तु पापे न शरीरं नाम। तस्मिँश्चासति न दुःखं नाम। विना दुःखमवस्थातुमेव वयं बहूनेव प्रयत्नान् कुर्महे।

द्वितीयो यदि कश्चित् स्यात्, यदि च सोऽस्मत्तो बलवत्तरः स्यात्, तर्ह्येव भीतिर्नाम समुदेति, यदि सुन्दरः स्यात्, तर्हि कामो नाम भवति चित्तविकार उदेति। द्वितीयेऽसति न कामो नाम, न द्वेषो नाम, न भीतिर्नाम; वृश्चिकात् सर्पाच्चास्माकं भीतिरुदेति। यदि वृश्चिकास्सर्पाश्च भवेम, तर्हि कुतस्ततो भीतिः? अस्मत्त एव वयमेव किं बिभिमः? द्वितीयो नाम कश्चन यावद् वर्तेत, तावदेवमेव भीतिरनुवर्तेत। ततोऽद्वितीयीकरणमेवाद्वैतं नाम, द्वितीयेऽसति भीतिर्निवर्तेत इत्युपनिषद् वदति।

प्रपञ्चे बहवो वर्तन्ते खलु! सर्व इमे कथमेकीभवितुं शक्नुवन्ति? द्वितीयेऽसति न कामो भवतीति तु निश्चयः। इतः परमपि वा दुःखाभावार्थं विना काममवस्थातव्यम्। द्वितीयं विनाऽवस्थानं कथं कर्तुं शक्यते?

वेदान्तोऽस्मिन् लोके वयं नानावस्तूनि यानि पश्यामः, तानि सर्वाणि मिथ्येति वदति; सर्वमीश्वरस्वरूपमिति वदति; नास्माकं तथा प्रतीयते

खलु। सर्वं यदीश्वरस्वरूपम्, तर्हि अस्माकं प्रतीतिर्मिथ्या स्यात्। अस्माकं प्रतीतिर्यदि सत्या स्यात्, तर्हि नास्माकं दुःखं समापतेत्, परन्तु दुःखमापतति। ततो वेदान्तो यद्वदति, तदेव सत्यम्। यदि तत् सत्यम्, तर्हि सर्वमीश्वरस्वरूपमिति निश्चितं स्यात्। अस्माकं प्रतीतिर्मिथ्या, सत्यमपरमेकं वर्तते। मिथ्या वस्तून्यस्माकं चक्षूंषि पश्यन्ति। सर्वत्र लोकेषु सत्यमेकं वस्त्वनुगच्छतीत्यद्वैतशास्त्रं वदति। अस्माकं वस्तूनीति प्रतीयमानानि सर्वाणि मिथ्या। सत्यमेकमेव वस्तु।

सर्वमीश्वरस्वरूपं चेत्, वयं केवलमन्ये वा ? अस्मानपि तदीश्वरसात्कर्तुमर्हामः। तदानीं द्वितीयं नाम न भवति। वयमिदानीं पृथक् पृथक् पश्यामः। सर्वस्येश्वरात्मना दर्शनमेव समीचीनं दर्शनम्। विना द्वैतं वयमपि यद्येकीभवेम, समीचीनं भवेत्। लोकेऽपि द्वे मनसी यद्येकीभवतः, तर्हि न कलहो भवति। तद्वत् सर्वेऽपीश्वरीभूयैकीभवन्ति चेत्, सर्वे वयं भवामः। अस्माकमस्मासु कामना तदानीं नोदियात्। आशायामसत्यां न पापं भवेत्। पापेऽविद्यमाने देहो न स्यात्, देहेऽसति तु दुःखमेव न भवति। 'तस्या दुःखनिवृत्तेरद्वैतमौषधम्। अद्वितीयीकरणमद्वैतम्। सर्वस्य ब्रह्मात्मना दर्शनमद्वैतम्। सत एव सद्रूपेण दर्शनमद्वैतम्। इदमेव पूर्वोक्तानि पुस्तकानि वदन्ति।

अत्र कियन्तोऽप्याक्षेपा उद्यन्ति। तेषु न्यायाभासमूलाः केचन, केचन तु दुर्न्यायमूलाः, शास्त्राणि सर्वेषां तेषां परिहारं वदन्ति। अद्वैतस्य साधनानि वदन्ति। भगवत्पादैः कृताः प्रकरणग्रन्थास्तमेवोपदेशमुपदिशन्ति।

वयं स्वपिमः। सुप्त्वोत्तिष्ठामः। सम्यक् स्वपिमः। कदाचन स्वप्ना भवन्ति। यद् जागृमः, सा जाग्रदवस्था। यत् स्वप्नं पश्यामः, सा स्वप्नावस्था। यत् सम्यग् निद्रामः, सा सुषुप्त्यवस्था। एवं तिस्रोऽवस्था वर्तन्ते। वयं जागृमः कर्म कर्तुम्। सम्यक् स्वपिमः कर्मकरणनिमित्तान् श्रमानपनोदितुम्। एताभ्यां द्वाभ्यामेवालं खलु ! स्वप्नः किमर्थ इत्यालोचयम्। ईश्वरस्सर्वत्र वर्तते। सोऽद्वितीयं ब्रह्म। सर्वमात्मस्वरूपम्। तद् निदर्शन-

मुखेन निरूपयितुं निदर्शनार्थमिमं स्वप्नं सृजतीति प्रतिभाति। अपरं किमपि प्रयोजनं नास्ति। अयं प्रपञ्चोऽस्माकं बहुधा प्रतीयते, स्वप्नवद् वर्तते। स्वप्ने कान्यपि कान्यपि दुःखानि सुखानि चाविर्भवन्ति प्रतिभान्ति। स्वप्न उपरते किमपि नास्ति। स्वप्ने दृश्यमाने आसीदिति प्रतिभातं शरीरमपि नावतिष्ठते। एवं स्वप्नमपश्यामेति जानन् एक एव परिशिष्यते। स्वाप्निकानि सर्वाण्यपराणि गच्छन्ति। प्रपञ्चस्वप्नादस्मासूत्थितेषु ज्ञानमेकमेवावशिष्यते। तदेव वस्तु सत्यम्। तस्यैवाद्वैतमिति नाम। सहस्रशो दर्शनं द्वैतम्। वयं सर्वेऽपि द्वैतिनः, द्वैतानुभवे वर्तामहे। परंत्वद्वैतं विश्वसन्तोऽनुभवे द्वैतरूपं स्वप्नमेव पश्यामः। स्वप्ने व्याधिं दुःखं चानुभवामः। व्याधेस्तरुणावस्था काचनास्तीति वयं विश्वसिमः। द्वैतं केन प्रदर्श्यते? चक्षुरादि नेदानीं प्रत्यक्षं प्रदर्श्यते। अद्वैतं वेदान्तेनैव प्रदर्श्यते। शास्त्रेण प्रदर्श्यमानमद्वैतम्, चक्षुषा प्रदर्श्यमानं तु द्वैतम्। सूर्यः कियदपि योजनं विस्तीर्ण इति शास्त्रं वदति। अस्माकं चक्षुः सूर्यः प्रादेशमात्र इति वदति। करेण पिहितं चेत् तिरोभवति। ततः स्वल्प इति प्रतिभाति। किं सत्यम्? यद् वयं पश्यामः, तदेव चेत् सत्यम्, शास्त्राणि वितथानि। अस्माकमज्ञातमेव शास्त्राण्यस्माकमुपदेष्टुमर्हन्ति।

(क्रमशः)

## प्रशान्तरत्नाकरम्

### चतुर्थाङ्कः

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

( ततः प्रविशति विपणिस्थः सपुत्रो धनदत्तः )

धनदत्तः—वत्स, मणिदत्त, लेखं वाचय, येनाधमर्णानां शेषम् ऋणं ज्ञास्यामि।

मणि—एष वाचयामि।

प्रविश्य ब्राह्मणः—भो धनदत्त, दीयन्तामद्य मे पञ्चशरावमिता-स्तण्डुलाः।

धन—वत्स, मणिदत्त, दृश्यतां लेखगतम्, कियदस्य ब्राह्मणस्य वैशम्पायनस्य देयमवशिष्यते,

मणि—एष पश्यामि ( लेखं निपुणं निरूप्य ) तात, सुमहदवशिष्यते।

धन—कथय कीदृशमिति।

मणि—विगतवत्सरात् प्रभृति सङ्कलनेन शतं सम्पद्यते।

धन—धिग् ब्राह्मण, विगतवत्सरात् प्रभृति मूल्यं न ददासि, पुनरपि ऋणं काम्यते? धिग् व्रीडाकरमिदं भवादृशाम्, तद्दीयतामनीतम्।

ब्राह्मणः—भद्र, दास्यामि।

धन—कदा दास्यसि?

ब्राह्मणः—क्रमेण दास्यामि।

धन—नहि, नहि, इदानीमेव दातव्यम्। दास्यामि-वादेन वत्सरो व्यतिक्रान्तः, पुनरपि दास्यामीति न युज्यते।

ब्राह्मणः—भद्र, धनदत्त, किं कुर्मः दुर्भिक्षविक्षुभिते जनपदे न शक्यते

प्रभूतेनापि प्रयत्नेन धनमर्जयितुम्। तत् क्रियतामनुकम्पा, येन स्वजनान् जीवयितुं शक्नुयाम्।

धन—स्वविनाशतः परविनाशो गरीयानित्यबोधजल्पितम्। तन्नाल-महमात्मनो विनाशेन परानभिरक्षितुम्।

ब्राह्मणः—भद्र, धनदत्त, प्रभूतधनशालिनस्तव किमेतावन्मात्रकेण अलब्धेनापि। तत् कियतः कालादनन्तरं दातव्यमित्यनुमन्यस्व।

धन—स्वार्थान्ध, ब्राह्मण, केवलं धनमेव मे पर्यालोकयसि, न पुनर्व्ययमपि, दृश्यतां व्ययमानं, येन प्रभूतमपि धनं स्वल्पमात्रं प्रतिभास्यति। दुर्भिक्षपर्याकुले महाभये जनपदे तस्करादिभ्य आपणपरिरक्षणार्थं नियुक्ताः शस्त्रधारिणः प्रभूतवेतनाः पुरुषाः, क्रयविक्रयादिव्यवहारनिर्वाहार्थमधिकृता दश निपुणाः कर्मठाः, गृहकर्मनिष्पादनार्थं शिशुरक्षणार्थञ्च सन्ति दासा दास्यश्च, सर्व एवैते समधिकं वेतनं गृह्णन्ति। अतः परं बान्धववार्ता,— मम स्वस्य तिस्रो भार्याः, प्रत्येकं पञ्च पुत्राः, प्रतिभार्यं श्वशुरः श्वश्रूः श्यालाः श्यालपत्न्यः श्यालानां पुत्राः पुत्रिकाश्च। वृद्धा जननी तस्याः सपरिजनाः पञ्च भ्रातरः, तिस्रो भगिन्यः पितुः स्वसारः पितृव्याः तत्पुत्राः अन्ये च परम्परया सम्बन्धिनः परिकल्पितसम्बन्धाश्चेति कियतां नाम्ना निर्द्देशं करोमि? सर्व एवामी मयि प्रभुभावेन वर्तमाना नक्तन्दिवं सविलासं कालं यापयन्ति। उपकरणानि पुनर्मयैव निष्पादनीयानीत्यत्र किंवा बहु वक्तव्यम्? तदेवं गते भूयांसोऽप्यर्थाः किमु चिरं तिष्ठन्ति? वाह्यास्तु जना मुग्धाः केवलमायमेव समीक्षन्ते न पुनर्व्ययभारमपीति प्रभूतवित्तमेव मां सम्भावयन्ति। तदनुगुणं तेषु समनुष्ठातुमशक्नुवन्तञ्च मां नितरां मितम्पचमेव समामनन्ति। तदत्र कथं वा मया शक्यं प्रतिकर्तुम्?

ब्राह्मणः—भद्र, धनदत्त, उपायान्तरमनीक्षमाणः कथयामि, न तु स्वार्थान्धतया, महालोहभारे शाकगुच्छक इव तवायं भारो नैव दुर्वहतां दधीत, तत् क्रियतां गतिरहितस्य दीनस्य मे कृपालेशः, देवतास्ते स्वस्ति करिष्यन्ति!

धन—एवमेव एकैकशः शाकस्तवकप्रचयेन महान् भारः सम्पद्यते। यः सबलैरपि दुर्वहो भवति। न भवान् एक एव तादृशः, सन्ति शतानि तथाभूतानां ये भिक्षावृत्तयः परान् परिक्लेशयन्ति। तदलमद्यापि व्रीडाकरेण प्रार्थनानुबन्धेन, स्वमेव पन्थानमवलोकयस्व।

ब्राह्मणः—हा हा निराशोऽस्मि परिजनजीवितेषु। भद्र, धनदत्त, अनिच्छयाऽपि प्रमादेनापि वा धनिकानां बहूनि धनानि भ्रश्यन्ति, एतदपि मत्वा निष्कपर्दके दरिद्रे दयस्व। देवतास्ते स्वस्ति विधास्यन्ति।

धन—मा तावद् भोः! न शक्यते, कथमनर्थमाक्रन्दसि।

ब्राह्मणः—अथवा का गतिः? कृपणाः खलु वणिजः! तदन्यत्र गत्वा भिक्षाप्रयत्नमनुतिष्ठामि। भगवन् प्रजापते, कथं त्वया दुःखमात्रपरिभोगाय दरिद्रसमाजः सृष्टः? यदि सृष्टः किमित्यनुभवशक्तिस्तत्र वितीर्णा? हा हा!

क्षुधा क्लान्तः पुत्रो मृगयति यदा स्वल्पमशनं
प्रदातुं तत्तस्मै कथमपि यदा नालमधमः।
तदा किं मूर्च्छा मां न खलु वृणुते शान्तिशरणं
हतं भाग्यं नूनं तदरिपदवीं गच्छति तदा॥

तदात्मनो भाग्यानुरूपमेव व्यवस्यामि। ( निष्क्रान्तः )

( ततः प्रविशति सपौत्रो वृद्धश्च्यवनः )

च्यवनः—अहो, सुतरां प्रसन्नमद्यान्तःकरणं मे, यत् सर्वाण्यपराणि ऋणानि परिशोध्य परिजनपरिपोषणाय बहोः कालस्य परिगृहीतं धनदत्तस्यापि सुमहद् ऋणं परिशोधयिष्यामीति। तथाहि—

त एव लोके सुकृतेन धन्या-
स्त एव जीवन्ति सुखेन सन्तः।
ये नोत्तमर्णस्य दृशोः कटाक्षं
न वाऽधमोक्तिं समनुस्मरन्ति॥

अहह ! हीनस्याप्युत्तमर्णस्य दर्पः सर्पप्रभाववत् ।
शस्तस्याप्यधमर्णस्य हीनता दीनताफला ॥

अपिच

दृष्ट्वोत्तमर्णस्य मुखं सुदूराद्
यात्यन्तरालं सहसाऽधमर्णः ।
मन्त्रौषधिभ्यामिव रुद्धवीर्यः
सर्पो नतिं गच्छति तत्समीपे ॥

तदद्य सममेव सर्वमृणं धनदत्तस्य निर्यातयितुं सामर्थ्यमुपगतः कृतकृत्यमेवाऽऽत्मानं सम्भावयामि । अहो कीदृशः खल्वसौ महानुभावो रत्नाकरस्य प्रियः सखा, यः स्वीयप्रभूतधनविसर्जनेन बन्धुकुलमिदमनुगृह्णाति ?

अथवा— धन्यं धनं तस्य महोन्नतस्य
सुरक्षितो येन धनेन बन्धुः ।
विपद्गतं बन्धुमुपेक्ष्य मोहाद्
वित्तं प्रपुष्णन्ति पिशाचकल्पाः ।

तन्नूनमेतस्य देवतास्तुष्टाः सर्वतः स्वस्ति करिष्यन्ति । भवतु साम्प्रतं समीहितसाधनाय धनदत्तमुपसर्पामि । वत्स, आत्रेय, एतद् धनदत्तस्य भवनं यावत् प्रविशावः ।

आत्रेयः—यथाज्ञापयति पितामहः ।

धन—( दूरात् च्यवनं दृष्ट्वा ) अये, एकस्य निष्क्रमणानन्तरमेव अपरः प्राप्तः ? एष च्यवनः अस्माकमेव वणिजां महाभाग्येन कतिचिद् दिनानि भिक्षाद्युपायैः परिजनान् परिपुष्णन्नद्य पुनरपि मन्ये ऋणार्थमेव समुपस्थितः । अहो रे ! कष्टा खलु धनिकता नाम ! तथाहि—

श्रीभारं प्रसमीक्ष्य भिक्षुकजना याच्ञाव्रतैरन्वहं
क्लेशं वित्तवतां दिशन्ति तदनु प्रान्ते स्थिता बान्धवाः ।
तत्पश्चादपि साहसेन विधिना दृप्यत्तरास्तस्करा
वित्तानां परिरक्षणाय धनिकाः पर्याकुलाः सर्वदा ॥

यद् भवतु तद् भवतु, समुपस्थितस्य च्यवनस्य आसनादिभिरुपचारैर्विशेषतः समादरं न प्रदर्शयिष्यामि।

तथापि यदि ऋणं याचेत्, तदा—

परुषेणैव वादेन भूतपूर्वमृणं बहु।
स्मारयंश्च्यवनं वृद्धं प्रत्याख्यास्यामि निश्चितम् ॥

वत्स, मणिदत्त, दृश्यतां च्यवनस्य नामलेखः, कियदस्य ऋणं देयमिति।

मणि—एष पश्यामि ( लेखं वीक्षते )।

( ततः प्रविशति विषण्णो राजपुरुषः )

राज-पु—हा कष्टम्! व्यतीता निशा व्यतीतप्रायश्चायं दिवसः प्राणैः पणैः सर्वत्र चौरसमाजमन्विष्यतां राजपुरुषाणाम्! परमद्यापि कुत्रचिन्नासादिता तस्य वार्त्तापि। हा हन्त अद्यतनदिवाकरस्यास्तमनेन सहैव नूनममीषां दीनानां जीवनदीपो निर्वाणमेष्यति। अपि नाम सममेव कृतमेतैः किमपि तादृशं दुष्कृतं कर्म, येन युगपदेव जीवनमेषां विलुप्येत? भगवन् सूर्य, नित्यमेव तिमिरमपाकृत्य जगतः सर्वाणि वस्तूनि प्रकाशयसि, तदिदानीं दर्शय चौरहतकान्, येन सर्वेषामेकदैव प्राणविपत्तिर्न स्यात्। अथवा

दीनेष्वद्य कृपावेशान्माऽस्तं गच्छ दिवाकर!
त्वयाऽस्तं गच्छता सार्द्धमस्तं यास्यन्ति ते ध्रुवम्॥

हा धिक् कष्टम्! चौरान्वेषणाय सर्वामेव निशां सर्वञ्च दिवसं निराहारमटतो मे नातः परं पादा अपि प्रसरन्ति।

तदेष दृश्यते आपणस्य सन्निहितः पादपः, अस्यैव तले क्षणं विश्रम्य पुनः समीहितसाधनाय प्रवर्त्तिष्ये। ( परिक्रामति )

धन—वत्स, दृष्टम्!

मणि—अथ किम्!

धन—कथय।

मणि—सार्द्धशतम्।

धन—सार्द्धंशतम् ? अपि निपुणतया दृष्टम् ?

मणि—अथ किम् ।

धन—अपि कृतं कुसीदसङ्कलनम् ?

मणि—न कृतम् ।

धन—आ मूर्ख, एवं किल वाणिज्यं वर्द्धयिष्यसि ? त्वया समधिष्ठितं सर्वमेव मे क्लेशसञ्चितमैश्वर्यं विनाशं प्राप्नुयात् । हा अदृष्ट !

मणि—मर्षयतु मर्षयतु तातः । एष क्षणेन सङ्कलय्य कथयामि । ( रेखां पातयित्वा ) तात ! शतद्वयी ।

धन—आम् ! इदमिदानीं यथार्थं निर्णीतवानसि, एष च्यवनः समुपस्थितप्रायो लक्ष्यते । तदस्यागतस्य वैमुख्यमासाद्य कार्यान्तरव्यग्रता प्रदर्शनीया, मा नाम समादरः !

मणि—यथाज्ञापयति तातः ।

(ततः प्रविशति प्रसन्नमुखः सपौत्रश्च्यवनः )

च्यवनः—स्वस्ति सपरिजनाय धनदत्ताय ।

धन—प्रणमामि । रत्नदत्त, एषा तण्डुलमोणिका इह बहिरेव स्थापिता । शीघ्रमिमां गृहस्यान्तः प्रवेशय । हा हा भवतामौदासीन्येन सर्वमेव मे विनष्टं स्यात् !

च्यवनः—भद्र धनदत्त, अपि कुशली भवान् सपरिजनः ?

धन—अथ किम् । अरे रक्षिणः, सावधानास्तिष्ठत, येन साहसिका वा भिक्षवो वा समेत्य न विघ्नमनुतिष्ठेयुः ।

च्यवनः । अहो हीनता धनदत्तस्य । साहसिकानां भिक्षूणाञ्च तौल्यं पश्यति ! ( प्रकाशं ) भद्र, मणिदत्त, लेखमालायामन्विष्यतां मदीयनामलेखः ।

धन—अरे मणिदत्त, अपेक्षितं पश्य, लिख्यतां चारुदत्तेन वैश्येन दशशरावमितं तैलं गृहीतम्, शोभनशर्मणा च गृहीताः पञ्चद्रोणमितास्तण्डुला इति ।

मणि—( लेखमभिनीय ) तात, लिखितम् ।

च्यवनः—भद्र, मणिदत्त, इदानीं दृश्यतां मदीयनामलेखः ।

धन—कथमिव ? पुनरपि ऋणग्रहणार्थम् ? मा तावद् भोः ! इदानीं यावद् गृहीतस्य उपकरणजातस्य मूल्यमप्रयच्छतो नास्ति पुनरद्य वस्तुलाभः ! तद् विरम्यताम् ।

च्यवनः—भद्र, धनदत्त, अलमधिक्षेपेण

दारिद्र्यविषदग्धानामिच्छापि प्रतिहन्यते ।
न मनोऽपि दरिद्राणामृणदानपराङ्मुखम् ।

धन—इच्छामात्रेणैव नोत्तमर्णस्य कृत्यसिद्धिः । तदतीतं निःशेषं निर्यातय, ततो नूतनमृणं लप्स्यसे ?

च्यवनः—भद्र, धनदत्त, तदर्थमेव समागतोऽस्मि । नवीनम् ऋणं न पुनर्ग्रहीष्यामि, यदा यदपेक्षितं तदतः परं मूल्यमदत्त्वा न ग्रहीतुमिच्छामि ।

धन—आर्य च्यवन, कियद्दातव्यं मन्यसे ?

च्यवनः—सर्वमेव दास्यामि ।

धन—आम् एवमिदम् ? अरे मणिदत्त, लेखं दृष्ट्वा वाचय, कियदनेन प्रदेयमिति श्रुत्वा निवर्त्तताम् । हंहो दैव, एष मन्यते पञ्चषैरेव वा रूप्यकैः ऋणस्य मोक्ष इति । तत् कथय ।

मणि—आर्येण च्यवनेन शतद्वयमृणं निर्यातयितव्यम् ।

च्यवनः—भद्र, धनदत्त, एष ददामि, गृह्यतामिदं शतद्वयम् । ( वस्त्रग्रन्थिमुन्मोच्य उपनयति )

धन—( स्वगतं ) अये सत्यमेव ददाति ? आश्चर्यमाश्चर्यम् ! अस्य तावताऽल्पकालेन कथमेतावती समृद्धिः ? ( प्रकाशम् ) आर्य, प्रणमामि, मर्षयतु मर्षयतु भवान मम मन्दभाग्यस्य क्रियान्तरान्तरायजनितमपराधम् ! अरे कः कोऽत्र ? आर्यस्य च्यवनस्य आसनमुपनय, अरे मणिदत्त, अद्यापि मध्यस्थ इव लेखं पश्यसि ? शीघ्रमार्यस्य पादौ

गृहाण। आ मूर्ख, गुरुजनपरिचर्यामपि न जानासि? कथमेतावता युष्माकं कल्याणं सम्पत्स्यते? अरे रत्नदत्त, शीघ्रमस्य बालस्य मत्स्यण्डिकाखण्डमुपहर। अहह! किमहं स्थविरः सर्वत्र युगपद् दृष्टिं प्रवर्तयितुं शक्नोमि? हा हा! सर्व एवामी मध्यस्थाः कर्तव्यार्थेषु! न जाने का पुनरेषां गतिरग्रतो भविष्यति?

( सर्वे यथोक्तं कुर्वन्ति )

च्यवनः—भद्र, धनदत्त, अलमेषामनिमित्तेनाधिक्षेपेण। गृह्यतामिदं तत् शतद्वयम्।

धन—( स्वगतं ) अहो लाभः! दिष्ट्या खल्वद्य वर्द्धामहे। (प्रकाशं) आर्येण प्रदत्तमिदं न स्वहस्तेन ग्रहीतुं शक्यते। अरे मणिदत्त, गृहाण, का गतिः?

मणि—एष आर्यादेशाद् गृह्णामि। ( निपुणं परीक्ष्य संख्याय च रूपकाणि गृह्णाति )

धनः—आम्! निपुणः खलु वत्सो मणिदत्तः कार्यं जानाति। (प्रकाशं) आर्य अस्ति मे महत् कौतूहलम्।

च्यवनः—किमधिकृत्य?

धन—कुतः खल्वयमार्यस्य अकस्मादेतावद्धनागम इति। तद् यदि श्रोतव्यमिदं मन्यसे, तदा तत्कथनेनानुग्रहीतुमर्हसि।

राज—पुरुषः—आम्! ममाप्यस्ति कौतूहलं! तत् अवधानेन शृणोमि! अपि नाम विधिरिहैवास्मासु दयां कुर्वीत?

आत्रेयः—कथं वा न श्रोतव्यम्? मम तातेन पूर्वद्युः सुबहूनि धनान्यानीतानि।

धन—रत्नाकरेण?

आत्रेयः—अथ किम्।

धन—आर्य, अपि सत्यम्?

( क्रमशः )

# हिन्दुः

[ निबन्धकः—श्रीशशिमोहन-तर्कशास्त्री ]

विद्यालये दर्शने च जातौ च देश-धर्मयोः ।
प्रसिद्धो हिन्दुशब्दस्य व्यवहारो विपश्चिताम् ॥
मेरुतन्त्रगतिं हित्वा नवमार्गमुपेयुषा ।
बहुधा हिन्दुशब्दस्य व्युत्पत्तिर्दर्श्यतेऽधुना ॥
हिन्दुः सान्त उकारान्तस्त्रिबिन्दुर्बिन्दुभावतः ।
उच्यते द्विविधः शब्दस्तत्त्वं निश्चिनु साम्प्रतम् ॥

तत्र सान्तस्त्रिबिन्दुः

हरो हकारः पुरुषः परोऽसौ त्रिबिन्दुनेन्दुः प्रकृतिः परा सा ।
आवृत्तिमात्रेण तयोर्यतः सौध्यानेन हिन्दुः प्रथितो द्वयोः स्यात् ॥१॥
बीजं हसौः स्याद् यदनेन पुण्यं तदेव वाणी गृहमध्यसंस्थम् ।
जानाति यो यः सविशेषमेनत् त एव नाम्ना किल हिन्दवः स्युः ॥२॥
सः सर्गयुक्तो यदि वा भवेत्तु हकार एषोऽपि च बिन्दुभाक् सः ।
क्रमोत्क्रमेणैव विचिन्तनीयो यैर्यैस्त एव च हिन्दवः स्युः ॥३॥
स सर्गकाले प्रलयान्धकाराद् बिन्दुः पुमान वा प्रकृतिस्तु तद्युगम् ।
आविर्बभूवात्र परञ्च ब्रह्म त्रिबिन्दुरूपेण पुनस्त्रिकोणम् ॥४॥
त्रिदैवतं तच्च गुणत्रयं वा त्रिलोकरूपं भुवनत्रयञ्च ।
पुनस्त्रिधामानि गयात्रयन्तत् काशीत्रयं वा खलु तीर्थराजः ॥५॥
सरस्वती सा यमुनाथ गङ्गा काशी च गङ्गा मणिकर्णिका वा ।
मन्दाकिनी भोगवती च गङ्गा चैतन्यवैराग्यसुखस्वरूपम् ॥६॥
ज्येष्ठा च रौद्री सह रामया तत् स्थूलेन सूक्ष्मेण परं तृतीयम् ।
सोमाग्निसूर्याश्च सहाग्निभिर्भिस्त्रिभिर्ऋक्सामसन्तानयजुस्तथैव ॥७॥

दिक्कालरूपं गगनं तदेतद् आपोऽग्नयो वापि च वायुरूपम् ।
स्थूलश्च सूक्ष्मश्च तदेव कारणं शरीरमित्येव भवेदवश्यम् ॥८॥
सन्ध्यात्रयन्तत् त्रिपदा च विद्या त्रीण्येव तत् तान्यपि दर्शनानि ।
इडा सुषुम्णा सह पिङ्गलाभिर्वायुः स सूर्यः सहिताग्निना तत् ॥९॥
जलाग्निपृथ्वी त्रयमेतदेव सृष्टिः स्थितिर्वा लयरूपमेवम् ।
त्रितारूपं ननु मन्त्रवर्णे त्रिकूटरूपं तदु सम्भवेच्च ॥१०॥
सर्वात्मकस्तत् प्रणवस्त्रिकूटः सर्वेश्वरेणैव नियन्त्रितश्च ।
स्वयं त्रिशक्तिस्त्रिविधश्च सर्वं जगत्प्रपञ्चं रचितं तदेतत् ॥११॥

अधोमुखत्रिकोणेन परा शक्तिर्निगद्यते ।
पुमानूर्द्धेन तेनैव षट्कोणैः प्रकृतिः पुमान् ॥१२॥
त्रिकोणैः पञ्चभिः काली श्रीकण्ठस्य चतुष्टयैः ।
पञ्चभिः शिवपत्नीभिर्नवभिस्त्रिपुरेश्वरी ॥१३॥
त्रिकोणैस्ता महाविद्याः सर्वा इति तु तत्त्वतः ।
त्रिकोणं स्नानकाले तु सन्ध्यायां पूजनेऽपि च ॥१४॥
घटे पीठे च शङ्खेऽपि तेषां तत् परमं धनम् ।
सर्वयन्त्रमयं तत्तु त्रिबिन्दुरेव तत्त्वतः ॥१५॥

हिंसन्ति दुःखान्यपि कर्मणा ये त एव लोके प्रथिताः पृथिव्याम् ।
व्युत्पत्तिबोध्यं हृदयोरिदुद्भ्यां बिन्दोर्विसर्गादपि नामधेयम् ॥१६॥
प्रातः स्मरेयुः पुरुषं पुराणं ये येऽपि मर्त्याः सहितं स्वशक्त्या ।
हृदिस्थमेकं वरदं वरेण्यं ते हिन्दवः कर्मभुवि प्रसिद्धाः ॥१७॥
प्रातः स्मरेयुः परितो वरेण्यं हरं हरिं हैमवतीञ्च भक्त्या ।
हेरम्बहंसौ गुरुदेवपूर्वौ ये येऽपि मर्त्याः खलु हिन्दवस्ते ॥१८॥
प्रातः स्मरेयुः परितस्त्रिकोणं ये येऽपि मर्त्या इह भक्तितस्तत् ।
नादेन युक्तं खलु बिन्दुमध्यं ते हिन्दवः कर्मभुवि प्रसिद्धाः ॥१९॥
प्रातः स्मरेयुः खलु हंसमूर्ध्वे त्रिकोणमध्यं गुरुपादुकाभ्याम् ।
युतं तदेवं किल कर्मभूमौ ते हिन्दवः कर्मभुवि प्रसिद्धाः ॥२०॥

प्रातः स्मरेयुश्चतुरास्पादं ये त्रिकोणयुक्तं गुरुपादपद्मम् ।
सोऽहम्मयाः सर्वविनोदतुन्नास्ते हिन्दवः कर्मभुवि प्रसिद्धाः ॥२१॥
न याचन्ते ये ये धनजनयशः कीर्त्तिसहितं
त्रितापैर्वा युक्ताः सततमितरङ्गब्धुमनसः ।
विपत्कान्तारे वाऽप्यभिनिपतिताः सर्वसुखिनो
न वा जाने के ते रसिकपुरुषा हिन्दव इह ॥२२॥
सहस्रारे पद्मे यदपि सततं राजत इ
त्रिकोणाख्यं ब्रह्माप्यकथहमयं बिन्दुसहितम् ।
हकारान्तं सं वा प्रथितमनुजः संस्मरति चेत्
सबिन्दुं बिन्दुभ्यां युतमपि च तौ सुस्थिरमतिः ॥२३॥
क्रमेणैवं विद्वान् विधित इह वा व्युत्क्रममयौ
स हिन्दुः स्याद् धन्यस्त्वितरजनभिन्नः पुनरयम् ।
यथा ब्रह्मेशौ ताविदमिति पुनर्नैव विदितौ
तथा हिन्दुः सत्यं सकलमनुजैर्ज्ञायत इति ॥२४॥
शिवः कालैर्देशै रहित इति सर्वत्र विदितं
यथा गोत्रै रूपैर्वयमपि तथा नामयशसा ।
अनेवञ्चे द्रूपैर्जगति विदितः सर्वद इति
कथा का वाऽस्माकं परमुखदशामन्तिमयुगे ॥२५॥
अनुष्ठातुं योग्याः कथमिह न ते कर्मनिवहा
दशाष्टाभिः पुण्याः सहितगुणिता अर्द्धरहिताः ।
अनुष्ठातव्या यैः सततमिह वा कर्मनिपुणै-
स्त एवैते चोक्तं सकलमनुजैर्हिन्दव इति ॥२६॥
संस्कारमुख्यैर्दशभिर्युतास्त इहैव पुण्ये किमु नापि भारते ।
धीराः स्थिरा वेदमये प्रवीणा नाम्ना नवीनाः किमु नैव हिन्दवः ॥२७॥
वेदाङ्गगङ्गामधिकृत्य ये वा स्नाता भवेयुर्मणिकर्णिकासु ।
वेदेषु नित्यं परितोऽतिवृद्धास्ते हिन्दवः कर्मभुवि प्रसिद्धाः ॥२८॥

येऽप्यानुगत्यं परितोऽत्र लब्धुं तेषान्तु सेवामभितश्चरेयुः ।
तेऽत्रैव बाला ऋृजवोऽतिपुण्या उच्चैर्गतिं किं न पुनर्लभन्ते ॥२९॥
ये स्थावराद्यां सकलामवस्थामतीत्य नित्यं क्रमतोऽधिचक्रुः ।
उच्चैस्तरां नीतिवशेन तान्तां तेऽत्रैव तेषां नगणे सुसिद्धाः ॥३०॥
आचम्य शुद्धाः शिखया युता हि संस्मृत्य विष्णुं तिलकेन संयुताः ।
त्रिपुण्ड्रयुक्ता अथवापि भस्मना सर्वाणि कर्माणि समारभन्ते ॥३१॥
मध्यत्रिकोणेऽङ्कुशमुद्रयाऽथ तीर्थानि पुण्ये चतुरस्रके बहिः ।
संकीर्त्त्य नामान्यपि तानि तान्येवावाह्य मज्जन्ति सदैव हिन्दवः ॥३२॥
स्नात्वा प्रतर्प्यैव सदा वरेण्यान् देवानृषीन् बन्धुगणान् पितॄंश्च ।
मातुः पितुर्वा स्वगणान् सपिण्डांस्तृप्ता य एवात्र त एव हिन्दवः ॥३३॥
सुश्रद्धया श्राद्धकृतोऽत्र पिण्डदास्तीर्थे गयायामपि मृत्युवासरे ।
अमाष्टकास्वाश्विनकृष्णपक्षे ते हिन्दवो भारतवर्षसंज्ञे ॥३४॥
अर्घ्येण हंसं परितः समर्च्य हेरम्बमादौ परिपूजयन्तः ।
सयोनिलिङ्गं पितरौ तु पार्थिवे प्रतीकरूपे हरमर्चयित्वा ॥३५॥
तामेव वा हैमवतीं प्रयत्नाद् भक्त्याथ कर्माणि समापयन्तः ।
नामानि संकीर्त्य हरेः प्रवीणा आदौ तथान्तेऽपि च हिन्दवः स्युः ॥३६॥
परोपकारव्रतमाचरन्तो ये वैश्वदेवं परितः समाप्य ।
भुक्त्वा सदा शेषभुजे तु दद्युस्ते हिन्दवो भारतवर्षसंज्ञे ॥३७॥
निषिद्धकर्माणि परित्यजन्तो यत्नाद् विधेयं समुदाचरन्ति ।
ये श्रद्दधीरन्नपि शास्त्रजाते ते हिन्दवो भारतवर्षसंज्ञे ॥३८॥
वेदादिमन्त्रांश्चतुरः पठन्ति ग्रासं गवे येऽहरहस्त्यजन्ति ।
गायन्ति शान्तीः सततं वरिष्ठास्ते हिन्दवो भारतवर्षसंज्ञे ॥३९॥
दिव्यांश्च भौमानपि चान्तरिक्षानुत्सार्य विघ्नान् न्यसनैः सुशुद्धाः ।
मुद्रादिदर्शं जपकर्म सम्यक् कृत्वा तु कर्माणि समापयन्ते ॥४०॥
आधारशक्तिं प्रकृतिञ्च कूर्मम् अनन्तनागं कमलासनञ्च ।
पीठस्थ देवान् सकलानथान्यान् सम्पूज्य कर्माणि समापयन्ते ॥४१॥

क्षितिं जलं वा परिपूजयन्तः सदागतिञ्चाथ हविर्भुजं वा ।
आकाशमन्ते यजमानसंज्ञं सोमञ्च सूर्यं प्रथिता हि हिन्दवः ॥४२॥
हीनोऽशिवः शङ्करनामभाक् शवो नाम्ना च धाम्ना विभवेन युक्तः ।
देशेन कालेन न चानुशिष्टो रूपेण गोत्रेण च नित्यतृप्तः ॥४३॥
जात्यापि विज्ञानमयो वरेण्यो महेश्वरो भूतपतिर्विभूतिभाक् ।
योगी न भोगी सकपालवह्निर्यथा तथैवापि च हिन्दवः स्युः ॥४४॥

हसौर्बीजं यत्नात् प्रकृतिपुरुषौ पुण्यमभितः
स्मरेयुः प्रातर्वा सततमिह ये कर्मनिपुणाः ।
पुनर्हंसः सोऽहं नियतमपि ये चिन्तनरता-
स्त एवोक्तं पुण्याः सकलमनुजैर्हिन्दव इति ॥

———

# आयुर्वेदे शालाक्यतन्त्रम्

[ निबन्धकः—भिषगाचार्य-श्रीज्योतिषचन्द्र-सरस्वती ]

साम्प्रतं वर्षेऽस्मिन् एष एव सिद्धान्तो जनतासु प्रचरति यद्,—आयुर्वेदे शालाक्यतन्त्रोक्तानां चक्षुः-कर्णादिसम्भवानां व्याधीनामुपक्रमो नास्त्येवेति। वैद्यप्रधानास्तु सर्वत्रायुर्वेदस्योन्नत्यै (?) कायेन, मनसा, वाचा समीहन्ते। इत एव निखिलभारतीयायुर्वेदमहासम्मेलनं व्ययबाहुल्येन प्रतिप्रदेशमा षड्विंशतिवर्षात् सम्मिलयते। तन्निदेशमनुसृत्य च नानाप्रदेशेषु प्रादेशिकसम्मेलनान्यपि निर्वर्तन्ते। फलन्त्वस्य किं भवतीत्यधुना जिज्ञासावसरः संप्राप्तः। सम्मेलनैरेभिरचर्चितप्रायाणां मलिनमलिनतराणां शल्यशालाक्यादीनां चर्चा कुत्रापि भवतीति न श्रूयतेऽपि। परन्त्वत्र प्रतिदिनं जनताया दृढतर एव प्रत्ययो भवति यद्,—आयुर्वेदे शल्य-

शालाक्यादितन्त्रस्य गन्धोऽपि नास्ति, सत्स्वपि च तेषु तानि तथैवा-वैज्ञानिकानि, तथा च मुष्टिमेयानि, यैः पाश्चात्यविज्ञानोद्भाषितेऽस्मिन् युगे न किमपि प्रयोजनं संसाध्यते, नापि च तैः काप्युपकृतिर्जनतायाः, अतस्तेषां चर्चा निरर्थिकैवेति। किं कारणं, तथैव समेता वयं सम्मेलने वाङ्मात्रेणैव प्रतिपिपादयिषाम आयुर्वेदस्य प्राक्तनं गौरवमात्रम्। आदियुगे मधुनास्माकं मुखं मधुरीकृतमिति प्रतिपाद्यैव कृतकृत्यतां गताः। अत्यतिप्रयत्नत-मेनाप्यनेन, नानाविप्लवविध्वस्तेनापि यावदेव साम्प्रतं शिष्यते, तावतैव नव्यपाश्चात्यतन्त्रमिव ततोऽधिकतरं वा देशस्यास्य स्वस्थस्य स्वास्थ्य-रक्षणे, व्याधिपरिमोक्षे च कार्यसिद्धिर्भवेदिति तु न खलु जनतासु प्रचार-यितुं परं प्रयत्नं प्रादर्शयाम।

अपि चैतज्जनताया आयुर्वेदे श्रद्धाभावस्य कारणान्तरं वर्तते,—आयुर्वेदमहासम्मेलनसृष्टेरनन्तरमनेकेषु प्रदेशेषु पाश्चात्यतन्त्रनिष्णातानां प्राच्यपन्थिनाञ्च वैद्यानामवैद्यानां वा प्रयत्नातिशय्येन राष्ट्रसहायतया असहायतया वा पाश्चात्यप्रथया केचन शिक्षागाराः सम्भृतसम्भाराश्चातुरा-लयाः सृष्टाः। तेष्वचर्चितानां शल्यशालाक्यादीनां योग्याकरणाय परः सुयोगोऽभूत्। परमेतदेव नः परमदुःखाकरं यत्, तेषु तेष्वातुरालयेषु पाश्चात्यतन्त्रोक्तेनैव विधिना कर्मनिष्पादनात्तत्र तत्र विभागे डक्टराख्याना-मेव प्राधान्येन प्रभुत्वं प्रवर्तते, विशेषतस्तत्र तत्र प्राच्यवैद्यानां प्रवेशाधि-कारोऽपि न दृश्यते। अत एव विद्यार्थिनः शालाक्यतन्त्रोक्तानां व्याधीनां प्राच्यमतेन नामान्यपि ज्ञातुं नोत्सहन्ते का कथा परिचयस्य। एवं गते अस्मद्भाविवैद्यस्थानीयानामपि विद्यार्थिनामायुर्वेदे शल्यशालाक्यादिकं पूर्णत्वेन वर्तत इति प्रत्ययो न जायते, किमुतेतरेषाम्। अनयैव विप्रकृत्यायु-र्वेदस्य महानहतः सम्पद्यते। वयमेवात्राभियोज्या इत्यस्माभिरेव परिकर-बद्धेन तन्निराकरणाय सम्यग् यतितव्यम्।

नाद्यत्वे आयुर्वेदसेविनामनेके शालाक्यतन्त्रमालोचयन्ति, तदुक्तं कर्म वा कुर्वन्ति। तथा द्वितीयं कारणं यत्तत्र शल्यतन्त्रस्यापि मनाक्

सहायतापेक्ष्यत इति। यद्यपि स च शस्त्रोपचारो लघुरेव (Minor operation) मन्तव्यस्तथापि सोऽन्त्यज इव वैद्यैरस्पृश्य एव वर्त्तते। साम्प्रतन्तु पाश्चात्यवैद्यकस्य सर्वाङ्गेषु शिक्षिता, राजानुमोदिता, डक्टाराख्याः पण्डिता वैद्या बभूवुर्भवन्ति च, परन्तेऽपि प्राच्यवैद्याभिधानग्रहणादेव यन्त्रशस्त्रादिकमस्पृश्यमिति दूरतः परिहरन्ति, न जानीमहे किमत्र कारणं वर्तते। भवेन्नाम तत्र तेषामजितहस्तता, भवतु वा तेषामायुर्वेदे श्रद्धाभावः, स्याद्वा किमप्यप्रकाश्यं निदानम्। आशास्महे च पाश्चात्यतन्त्रनिष्णाता नः सुहृदः सममस्माभिर्विशदमालोचयिष्यन्ति संशयमिदमपनोदयितुमिति। अनयैवालोचनयास्माकं कर्मपद्धतिरपि निर्दिष्टा भवेत्। ये खलु राजानुमोदिता डक्टारा वैद्याः सञ्जाताः, ते तत्र तत्र शल्यशालाक्यादौ असम्यङ्निष्णाता अपि सकर्माभ्यासेनाध्ययनेन च किञ्चिज्ज्ञानमाहृतवन्त इत्यत्र नास्ति तर्कावसरः। त एव प्राच्यशालाक्यतन्त्रानुशीलने परं योग्या इति, तानेव प्रार्थयामः यद्, भवन्त एवायुर्वेदशालाक्यं परमप्रयत्नेनालोचयन्तु, ततश्चेत्तत्रायुर्वेदस्य योग्यताभावः परिदृश्येत, तर्हि तमेव युक्त्या प्रतिपादयन्तु, ततो वयं तदालोचनाया व्यर्थचेष्टातो निवर्तिष्यामहे। अन्यथा भवन्त एव विद्यागारे आयुर्वेदशालाक्यमध्यापयन्त्विति। विद्यालयेष्वनेकेष्वेवं पाश्चात्यतन्त्रनिष्णाता अध्यक्षा अध्यापकाश्च सन्ति, परमिदमेव नो दौर्भाग्यम् यत्, तेषु केऽपि सम्यगधीतानां पाश्चात्यतन्त्राणां सहायेन प्राच्यं शालाक्यमध्यापयन्तीति नाकर्णितमप्यस्माभिः। वस्तुतस्तु यदि ते तथाध्यापनायायोग्या एव स्युस्तर्हि तथाविधैर्वैद्याभिमानिभिर्डक्टारैः वैद्यकविद्यायतनस्य शोभाभिवृद्धिं विना किमेवापूर्वं भवेदिति शङ्कितुमप्ययोग्या वयम्।

केचिदिदमसहमाना आहुः—आयुर्वेदविद्यालये पाश्चात्यतन्त्रसम्मतया पद्धत्या शल्यादितन्त्रशिक्षया सुफलमेव भविष्यति—यदुक्तं सुश्रुते—

"एकशास्त्रमधीयानो न विद्याच्छास्त्रनिर्णयम्।
तस्माद् बहुश्रुतः शास्त्रं विजानीयाच्चिकित्सकः॥" इति

यच्चोक्तं—"तदेव युक्तं भैषज्यं यदारोग्याय कल्पते।" इति

अत एव वैद्यकविद्यार्थिनश्चेत् पाश्चात्यशल्यादितन्त्रेष्वपि योग्यतां लभेरं-स्तर्हि विज्ञानसम्मतचिकित्सापद्धतेरायत्तीकरणात्तेषामुन्नतिरेव स्यात्। प्राच्यपन्थिनस्तु गतानुगतिकाः संस्कृतिमिमामसहमानास्तत्र विघ्नानुत्-पादयन्त आयुर्वेदस्यैवोन्नत्यां बाधां सृजन्तीति। निःसारस्यास्य तर्कस्या-यौक्तिकतां युक्त्या क्रमशः प्रदर्शयामः। नानाशास्त्रज्ञानमुपादेयमित्यत्र नास्ति सन्देहावकाशस्य लेशोऽपि। यत्र तु स्वशास्त्रज्ञानस्य दौर्बल्यं दृश्यते, तत्र चेत् परकीयतन्त्रमेव प्राधान्येनाध्याप्यं स्यात्तर्हि विद्यार्थिनां स्वतन्त्रे श्रद्धाभावोऽवश्यम्भावी स्यादेव। स्वतन्त्राज्ञः परमतानुसारतो यत्किञ्चित् कर्म कुर्वन्नपि वैद्यो वैद्यकतन्त्रानुसारतः कर्म करोतीति वक्तुं न शक्यते। यत्र यत्र चैवं शल्यशालाक्यादिषु पाश्चात्यतन्त्रेणैव बाला अध्या-पिता भवन्ति, तत्र तत्र प्राच्यशालाक्यादितन्त्रस्य गन्धोऽपि नाघ्राप्येत का कथा व्याध्यादिपरिचयादिषु। ये केऽपि विद्यार्थिनो माधवकरसंगृहीतस्य रुग्विनिश्चयस्यान्यस्य वा नेत्ररोगादिनिदानं पठन्ति, शुका इव तेऽर्थ-ग्रहाभावात् चिकित्साक्रममध्येतुं, तमनुसृत्य कर्म वा कर्त्तुं नोत्सहन्ते। पाश्चात्यक्रमस्यापि लेशमात्रग्रहणात्ते एवमुभयोः शास्त्रयोरज्ञा भवन्ति। एवं परिस्थितौ आयुर्वेदशालाक्यतन्त्रज्ञानरहितैः पाश्चात्यविज्ञानज्ञानलेश-समन्वितैर्भाविवैद्यैः काबोन्नतिरायुर्वेदस्यायुर्वेदसेविनो वा भवेदिति सम्यक् प्रबोधितेष्वस्मासु कृतज्ञा भविष्यामः।

न वयं पाश्चात्यतन्त्रनिष्णाताः, नातस्तत्तुलनया प्राच्यं तन्त्रमालोचयितुं योग्याः। ये खलु पाश्चात्यतन्त्रनिष्णाता वैद्यीभूता महोदयाः सन्ति, त एवात्र योग्यत्वेनाधिकृताः अपि आयुर्वेदे श्रद्धाभावादन्यस्माद्वा कारणान्नते-ऽग्रेसरा भवन्ति, आयुर्वेदो हि नेत्रादिविकारप्रशमने नाद्यत्वे समर्थ इति प्रतिपादयितुम्। तथापि ये त्व केचनायुर्वेदाध्ययनश्रममनङ्गीकृत्यापि वक्तुमुत्सहेरन्,—आयुर्वेदे हि युक्तानां शल्यशालाक्यादीनां गन्धोऽपि न वर्तत इति, दूरतस्तान् नमस्कृत्यायुर्वेदशालाक्ये येऽर्था आलोचितास्तानेव नातिसंक्षेपतो निवेदयितुमुत्सहामहे। माननीया आयुर्वेदज्ञाः पाठकाः,

नीरसोऽप्ययं निबन्धो भवद्भिः समनस्कैः पठितव्यः। ये च केचन पाठकाः पाश्चात्यशालाक्यनिष्णातास्तेऽप्यत्रोक्तेष्वर्थेषु हेयान विहायोपादेयानेव ग्रहीष्यन्तीति आशास्महे। "कृतस्नो हि लोको बुद्धिमतामाचार्यः शत्रुश्चाबुद्धिमताम्" इति चरकवाणीमनुसृत्य पण्डिताः खलु हंसा इव नीरं विहाय क्षीरं गृह्णन्ति। अद्वितीयः पाश्चात्यशल्यतन्त्रवित् स्वर्गतः सर्वाधिकारिमहोदयः श्रमेणैव सुश्रुतसंहितामधीतवान उक्तवांश्च "अद्यत्वेऽपि पाश्चात्यशल्यतान्त्रिकैरत्र बहु ज्ञातव्यं वर्तते" इति। ये खलु भाषान्तरितान ग्रन्थानधीत्य पाश्चात्यसमालोचकानाञ्चालोचनामधिगत्यायुर्वेदजिज्ञासवः स्युस्ते हि विभ्रान्तमार्गग्रहणात् पदे पदे विभ्रान्ता एव स्युरिति मन्ये। मूलग्रन्था एव तैरधिगन्तव्याः, तमेवानुसृत्य अर्थो आलोचयितव्याः। अन्यथा शालाक्यमालोचयितुं प्रवृत्तस्य मे लघुशस्त्रोपचारमेव (minor surgery) आलोचयितुमवसरो भवेत्।*

न खलु विभागेऽस्मिन व्याधीनां संख्या लघुतरा। कायचिकित्सायां यति व्याधय आलोचिताः, न खल्वत्र ततोऽपि स्वल्पतां पश्यामः। सुश्रुतमते त्वस्मिन् शालाक्ये त्रयोदशाधिकशतद्वयानां व्याधीनामुल्लेखो दृश्यते। परस्तात्तु वृद्धवाग्भटकाले स खलु ततोऽधिकतरां व्याधेः सत्तामवागच्छन, तस्य निर्देशस्तु एकत्रिंशदधिकशतद्वयमितानाम्। एतेषां व्याधीनामधिष्ठानानि एकादश एव। तद् यथा—नेत्रे, कर्णौ, नासा, शिरः, ओष्ठौ, दन्तमूलानि, दन्ताः, जिह्वा, तालुः, कण्ठः, सर्वञ्च मुखमण्डलमिति। एतत्तन्त्रोक्तेष्वनेके कायचिकित्सासाध्यव्याधितः कृच्छ्रतरा अचिकित्स्याश्च। केचिद्वा न कृते सद्यः प्रतीकारेऽङ्गहानाय मरणाय वा स्युः। अत एव वृद्धवाग्भट आह—

"उर्द्धमूलमधःशाखमृषयः पुरुषं विदुः।
मूलप्रहारिणस्तस्माद्रोगाञ्छीघ्रतरं जयेत्॥" इति

( क्रमशः )

* Vide Keith p. p. 505.

# धर्मपत्नी

( ३ )

[ निबन्धकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

सर्वस्यैतस्य पर्यालोचनया प्रतीयते—

१ पूर्वाचार्यैः विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यत इति कण्ठत एव प्रकृतिविकृतिभाव उपादायि ।

२ भगवता पाणिनिना सूत्रे प्रकृतिविकृतिभावो नोदलेखि ।

३ वार्त्तिककारस्य भाष्यकारस्य चावस्थितिकाले अश्वघासः श्वश्रूसुरं हस्तिविधेति समस्तानि पदान्युपलभ्यन्ते स्म, न पुना रन्धनस्थाल्यवहननोलूखलमिति ।

४ वार्त्तिककारमतेन—अश्वघासादिष्वामुख एव तादर्थ्यप्रतीतिः, भाष्यकृद्भिः प्रतिपक्षमुखमुद्रणेच्छयाऽनुभवं न्यक्कृत्य प्रारम्भे सम्बन्धसामान्यस्य प्रतीतिः पर्यवसाने च तादर्थ्यरूपस्य सम्बन्धविशेषस्य भानमिति व्यवस्थापितम् ।

५ उभयेषामपि मतेन रन्धनस्थाल्यवहननोलूखलम् इति पदे असाधुनी ।

अत्रेदमपि न विस्मर्तव्यं यद्भगवता भाष्यकारेण धर्मनियम-वृत्तिसमवायादिस्थलेपु चतुर्थीसमासानुकूल एव विग्रहः प्रदर्शितः । समासघटकानां शब्दानां विभक्त्यन्ततया प्रतिपादनेऽपि यदि विग्रहो न भवेत् तर्हि विग्रहवाक्यं कीदृशं न जानीमः । न च भाष्यकृद्भिररचितेन चतुर्थीतदर्थेतिसूत्रव्याख्यानेन विसंवादात् "कथङ्कारं नामाश्वारूढाः स्वयमेवाश्वान् विस्मरेयुः" इति न्यायेनेदृशेपु स्थलेषु कैयटादिप्रदर्शितं तात्पर्यपरत्वमेव युक्तमङ्गीकर्तुमिति साम्प्रतम्, चतुर्थी तदर्थेतिसूत्रव्याख्यानस्य प्रतिपक्ष-

मुखमुद्रणायैव प्रवृत्तत्वात्, तत्र भगवतोऽनाश्वासात् ततः प्राचीनेषु स्थलेषु स्वमतप्रदर्शनस्य सम्भवात्। धर्मार्थो नियमः धर्मप्रयोजनो वा नियमः इत्यत्र भर्तृहरिप्रभृतिभिः प्राचीनैर्व्याकर्तृभिः विग्रहानुकूलशाकपार्थिवादिसूत्रेण समासाभ्युपगमाद् अर्द्धजरतीयन्यायाश्रयणस्य चायुक्तत्वात्। किञ्च, कैयटादिप्रदर्शितदिशा सर्वत्रैव तात्पर्यप्रतिपादकत्वस्वीकारेऽधस्तादुल्लिखित-भामतीकारवचनस्यातत्त्वार्थकथनरूपो दोषो दुरुद्धरः स्यात्।

वृत्तिकारेण जयादित्येन न्यासकारेण च जिनेन्द्रबुद्धिना भाष्यमतमेवानूदितम्, अश्वघासादीनां पुनरुल्लेखोऽपि न कृतः। पदमञ्जरीकृता चास्तिकशिरोमणिना हरदत्तेन बाहुल्येनैतद् विचारितं भाष्यमतं च खण्डितम्। तथाहि प्रकृतविकारभावे समास इष्यत इति प्रतीकमुपादाय तेनोक्तम्—

"ज्ञापकात्। यदयं बलिरक्षितग्रहणं करोति तज् ज्ञापयति विकृतिश्चतुर्थ्यन्ता प्रकृत्या समस्यते इति अन्यथा कुबेरबलिः गोरक्षितमित्यत्रापि तादर्थ्यसम्भवादनर्थकं तत् स्यात्, हितसुखग्रहणं तु हितयोगे चतुर्थी वक्तव्या, चतुर्थी चाशिषीत्यतादर्थ्येऽपि चतुर्थीसम्भवान्न ज्ञापकम्। यदि विकृतिः प्रकृत्या समस्यते अश्वेभ्यः घासः अश्वघासः, अश्वेभ्यः सुरा अश्वसुरम्। विभाषा सेनेति नपुंसकत्वम्। हस्तिभ्यो विधा हस्तिविधा। विधा अन्नविशेषः। अत्र न प्राप्नोति। अश्वघासादयः षष्ठीसमासा भविष्यन्ति। ननु स्वरे विशेषो भवति। चतुर्थीसमासे हि सति चतुर्थी तदर्थ इति पूर्वपदप्रकृतिस्वरेण भाव्यम्, षष्ठीसमासे तु समासान्तोदात्तत्वेन। नैपोऽस्ति विशेषः। चतुर्थीसमासेऽपि नैव पूर्वपदप्रकृतिस्वरेण भाव्यं ज्ञापकात्—यदयं क्ते च इति चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवतीत्याह तज् ज्ञापयति प्रकृतिविकारभावाभावे एष स्वरो न भवतीति, अन्यथा गोरक्षितमित्यत्रापि चतुर्थी तदर्थ इत्येव सिद्धेरनर्थकं तत् स्यात्। नैतदस्ति ज्ञापकम्, हितार्थमेतत् स्यात्, गोहितमित्यत्र हि तादर्थ्यं नास्ति। एवमपि हिते चेति वक्तव्ये क्ते चेति सामान्यवचनं ज्ञापकमेव, सर्वथा कुबेरबलिरित्यादौ मा भूदित्येवमर्थं प्रकृतिविकारभावे स्वर एषितव्यः। अथ रन्धनाय स्थालीत्यत्र षष्ठीसमासः

कस्मान्न भवति। कश्चिदाह—भवत्येव, तद् यथा गोग्रासः, लीलाम्बुजम्, क्रीडासरः, वासभवनम्, नाट्यशाला इति। अपर आह—रन्धनस्थाल्यादयोऽनभिधानात् षष्ठीसमासा न भवन्तीति।

उभावपि प्रतिब्रूमः। येषु षष्ठीसमास इष्यते तेषु चतुर्थीसमास एवास्तु, येषु तु नेष्यते तेषु तु चतुर्थीसमास एवानभिधानान्नेष्यताम्। मा कारि ज्ञापनार्थं बलिरक्षितग्रहणम्, स्वरस्तु चतुर्थीसमासेऽपि पूर्वोक्तेन प्रकारेण प्रकृतिविकारभाव एव व्यवस्थास्यते। किं चैवं सति सूत्रमेवैतदनर्थकम्। यूपदार्वादिषु षष्ठीसमास एवास्तु। चतुर्थी तदर्थे [६।२।४३] इत्येतत्तु षष्ठी तदर्थे इति क्रियताम्, ज्ञापकाच्च स्वरस्य व्यवस्था क्रियताम्। नन्वर्थभेदो भवति। षष्ठीसमासे सम्बन्धमात्रं गम्यते चतुर्थीसमासे तु तादर्थ्यसम्बन्धविशेषः। नैषोऽस्ति विशेषः। आरभ्यमाणेऽपि चतुर्थीसमासे न दण्डवारितः षष्ठीसमासः, तत्रार्थप्रकरणादिना विशेषोऽवसेयः। यद्येवं केवलेऽपि षष्ठीसमासे तथा विशेषोऽवगंस्यते। किं च सिद्धान्तेऽश्वघासादिषु तावदर्थप्रकरणादिना तादर्थ्यावसायः, सर्वत्रैव तथास्तु नार्थोऽनेन। उच्यते। हितशब्देन तावत् षष्ठीसमासो न भवति तद्योगे चतुर्थ्या नित्यत्वादिति चतुर्थीसमास एव वक्तव्यः। ततश्च क्ते च [६।२।४५] इत्यत्रापि चतुर्थीग्रहणं कर्तव्यं गोहितमित्याद्यर्थम्। एवं च गोरक्षितमित्यत्र न स्यात्, चतुर्थ्या असम्भवात्, षष्ठी तदर्थे इत्यस्य चाप्रसङ्गः प्रकृतिविकाराभावात् इति रक्षितेनापि चतुर्थीसमास एव विधेयः, अर्थशब्देनापि योगे तादर्थ्यसम्बन्धविशेषस्य नियमेन प्रतीयमानत्वाच्चतुर्थ्या सम्भवितव्यमिति तेनापि चतुर्थीसमास एव कर्तव्यः, बलिसुखग्रहणमपि कर्तव्यम् तादर्थ्यस्य समासे नियमेन प्रतीतिर्यथा स्यादित्येवमर्थम्। तस्मादारब्धव्यमेव सूत्रम्। प्रकृतिविकारभाव एव समास इत्यस्य तु प्रयोजनं चिन्त्यम्।" इति।

न च यथोत्तरं मुनीनां प्रामाण्यम् इति वचनबलेन व्याकरणविषये भगवतो भाष्यकारस्य प्रामाणिकप्रवरमूर्द्धन्यत्वेन तस्य वचसश्चिन्त्यत्वं

प्रतिपादयता तस्मिंश्च श्रद्धाजाड्याभावं प्रादुष्कुर्वता हरदत्तमिश्रेण स्वमेवाश्रद्धेयत्वं प्रकटीकृतमिति वाच्यम्, शबरस्वामिप्रभृतिभिर्यथोत्तरेति वचनस्य मूले कुठारारोपात् तस्य प्रायिकत्वकल्पनाया एव समीचीनत्वात्। किञ्च जयादित्य-वामन-जिनेन्द्रबुद्धि-कैयट-मैत्रेय-माधव-भट्टोजिप्रभृतिभिः प्रामाणिकप्रयोगाद्यनुरोधेनान्तरान्तरा भाष्यविरोधि मतमपि प्रपञ्चितमिति नैतत् परोक्षं प्रेक्षावताम्।

यथा चास्माभिर्दृश्यते तथात्र भाष्यविरोधः प्रातिभासिक एव, न पुनः पारमार्थिकः, वृत्तिसमवाय-धर्मनियमादिपदव्याख्यानप्रसङ्गेन चतुर्थीसमासस्यापि भाष्यकृता कक्षीकृतत्वात्।

विजानन्त्येव च विद्वांसो यत् यं खलु रन्धनस्थालीशब्दमधिकृत्य प्रवृत्त एतावान् कोलाहलस्तस्यापि समस्तपदस्य साधुत्वं समर्थितं प्रामाणिकैर्वैयाकरणैः। तुल्यन्यायेनावहननोलूखलमित्यस्यापि साधुत्वं संसिध्यति।

( क्रमशः )

---

# धर्मपत्नी

[ निबन्धकः—श्रीहाराणचन्द्र-शास्त्री ]

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयो यत्र महाभाष्यकारादिभिः प्रामाणिकैरेकार्थीभावनाम्नी समुदायशक्तिरङ्गीक्रियते, तत्र धर्मपत्नीशब्दे का समासवृत्तिरिति जिज्ञासायां प्रथमतस्तावद् धर्मशब्देन पतिशब्दस्य षष्ठीसमासेन ( अष्टाध्यायी २।२।८ ) धर्मपतिशब्दे निष्पन्ने विभाषा सपूर्वस्य ( ४।१।३४ ) इति सूत्रेण वैकल्पिके ङीपि तत्सन्नियोगशिष्टनकारादेशे च धर्मपत्नीति सिद्धम्; पक्षे धर्मपतिरित्यपि साधु। उदाहृतं च तत्रैव सूत्रे महाभाष्यकारेण आशापतिः आशापत्नीति। व्याख्यातं चात्र कैयटोपाध्यायैः "आशायाः पतिरिति षष्ठीसमासः" इति। धर्मपत्नीशब्दोऽप्याशापत्नीशब्देन तुल्ययोगक्षेमत्वान्न प्रकारान्तरेण साधनमर्हति।

एवं स्थिते शास्त्रार्थे केचन प्रकृतिविकारभावाभावेऽपि तादर्थ्यचतुर्थ्याः

समासे साधुत्वमभिमन्यमाना महाभाष्यकारानपि सूत्रकाराशयानभिज्ञानभिमन्यमाना धर्मपत्नीशब्दे धर्माय पत्नीति चतुर्थीसमासं वदन्तोऽनुपादेयवचना एव। यदत्र वेदान्तकल्पतरुकाराणाममलानन्दसरस्वतीचरणानां सन्दर्भोऽप्पयदीक्षितीय इति प्रादर्शि * तस्यैव ग्रन्थस्याप्पयदीक्षितव्याख्यानमत्रांशेनोद्ध्रियते सुधियां विचारणार्थम्, येन सर्वं कुकल्पनाजालं पराहतं भवेत्—

---

* "अत्र चतुर्थीसमासः पाणिनेरिष्ट इति स्पष्टमेवोल्लिखितं सहृदयशिरोमणिभिरप्पयदीक्षितैः १।१।१ सूत्रीयभामतीव्याख्याने—

पाणिनिः किल चतुर्थी तदर्थार्थबलिहितसुखरक्षितैरिति तादर्थ्यसमासं सस्मार। चतुर्थ्यन्तः शब्दस्तदर्थवचनादिभिः शब्दैः समस्यते। चतुर्थ्यन्तशब्दार्थस्तच्छब्देन परामृश्यते तस्मा इदं तदर्थम्। यथा कुण्डलाय हिरण्यमित्यत्र कुण्डलं चतुर्थ्यन्तशब्दार्थः, तच्छेषो हिरण्यम्, तत्र कुण्डलशब्दश्चतुर्थ्यन्तः कुण्डलशेषवाचिना हिरण्यशब्देन समस्यते कुण्डलहिरण्यमिति। ततो (तथा)ऽर्थशब्दादिनाऽपि ब्राह्मणार्थं पय इत्यादि द्रष्टव्यम्। कात्यायनेन अ(त्व)यं समासः प्रकृतिविकृत्योर्नियमितः, चतुर्थी तदर्थमात्रेणेति चेत्तर्हि सर्वत्र प्रसङ्गोऽविशेषात्, प्रकृतिविकृत्योरिति चेदश्वघासादीनामुपसंख्यानम्"।

( संस्कृत-साहित्य-परिषत्, २१ वर्षस्य १म-संख्या १६३८—२६पृष्ठे )

अत्रत्यकल्पतरुग्रन्थशेषश्चायम्—

"एवं चार्थात्प्रस्तुते तन्निषेधसिद्धिरित्याह प्रकृतीति। इत्येवमादौ ब्रह्मजिज्ञासेत्येवमादावित्यर्थः। नन्वश्वार्थो घासोऽश्वघास इत्यादावप्रकृतिविकारेऽपि तादर्थ्यसमासो दृष्ट इत्याशङ्क्य कात्यायनेनैव समासान्तरमुपसंख्यातमित्याह अश्वघासादय इति"। यस्य भामतीग्रन्थस्य व्याख्यानायायं कल्पतरुग्रन्थः प्रवृत्तः, सोऽप्यत्र समुद्ध्रियते बोधसौकर्याय—

ब्रह्मजिज्ञासापदव्याख्यानमाह—ब्रह्मण इति। षष्ठीसमासप्रदर्शनेन प्राचां वृत्तिकृतां ब्रह्मणे जिज्ञासा ब्रह्मजिज्ञासेति चतुर्थीसमासः परास्तो वेदितव्यः॥ 'तादर्थ्यसमासे प्रकृतिविकारग्रहणं कर्त्तव्यम्' इति कात्यायनीयवचनेन यूपदार्वा-

कात्यायनेनैवेति। कात्यायनग्रहणमनादरेण शब्दाभियुक्तमात्रोपलक्षणं भाष्यकाराभिप्रायम्। भाष्यकारैः खलु तत्र वार्त्तिकमुल्लङ्घ्य यथाश्रुतसूत्रं समर्थयमानैः षष्ठीसमासः समाश्रितः। अत्रेदं भाष्यकारीयं वार्तिकप्रत्याख्यानम्* * * *; एवं सूत्रानुसारिभाष्यकारमतप्राबल्याद् वार्तिककारमतमनादृत्य चतुर्थीसमासासम्भव उक्तः। इदमेव भाष्यकारमतमनुसृत्य भट्टपादैर्धर्माय जिज्ञासेति शबरस्वामिवचनं षष्ठीसमासलभ्यार्थिकार्थप्रदर्शनपरं न तु विग्रहप्रदर्शनपरम्, तस्य ज्ञातुमिच्छेति निगमनवाक्येन षष्ठीसमासविभावनादिति व्याख्यातम्। आत्मनेपद-परस्मैपद-शब्दयोः प्रकृतिविकारभावाभावेऽपि तादर्थ्यसमासस्तु वैयाकरणाख्यायां चतुर्थ्याः (६।३।७ पा०) इत्यलुग्विधानसामर्थ्यात्। न च तस्मादेव ज्ञापकात् सर्वत्रापि तादर्थ्यसमासः शङ्कनीयः, तथा सति बलिरक्षितग्रहणवैयर्थ्यापत्तेरुक्तत्वात्।" इति।

अनेनैव परिमलग्रन्थेन "धर्माय नियमो धर्मनियमः" इति "वृत्तये समवायो वृत्तिसमवाय" इति च महाभाष्यग्रन्थः समाहितो वेदितव्यः। कैयटोपाध्यायो वैयाकरणत्वादसहृदयो भवतु नाम, सहृदयशिरोमणित्वेन स्वयमुद्दङ्कितोऽप्पयदीक्षितोऽपि "चतुर्थी तदर्थे (२।१।३६ पा०) ति सूत्रस्य महाभाष्यं प्रमाणयन् ईदृशेषु स्थलेषु षष्ठीसमासमेव युक्तं मेने। न च "धर्माय नियम" इत्यादि विग्रहप्रदर्शनमिति भाष्यकारेण स्वयमुक्तम्; न चान्ये वैयाकरणाः प्रामाणिकपदवीमुपारूढा एवमूचिरे। किञ्च "धर्माय नियम" इत्यादेर्विग्रहवाक्यत्वस्य भाष्यकाराभिप्रेतत्वे तस्य विग्रहवाक्यस्य चतुर्थी तदर्थे (२।१।३६ पाः) ति सूत्रभाष्येण सुस्पष्टे विरोधे पूर्वोत्तरविरुद्धार्थप्रतिपादकत्वेन महाभाष्यकारस्योन्मत्तप्रलापित्वेनाप्रामाण्यमापतेत्। न चैतदुचितमभ्युपगन्तुं वैयाकरणैः। हरदत्तेन तु "प्रकृतिविकारभाव एव समास इत्यस्य तु प्रयोजनं चिन्त्यमि"त्युक्त्या भाष्यकारीयमतमव-

---

दिष्वेव प्रकृतिविकारभूतेषु चतुर्थीसमासनियमात्, अप्रकृतिविकारभूत इत्येवमादौ तन्निषेधात् 'अश्वघासादयः षष्ठीसमासा भविष्यन्ति' इत्यश्वघासादिषु षष्ठीसमासप्रतिविधानात्—भामती १।१।१।

हेलितम्। परन्तु तन्मते रन्धनाय स्थालीत्यादौ समासाभावायानभिधानस्यैव शरणीकर्त्तव्यतयाऽननुगमदोषदिग्धता सुस्पष्टा। तस्मात्तादर्थ्यमात्रे प्रकृति-विकारभावविरहेऽपि चतुर्थीसमासस्य साधुत्वमभिमन्यमाना धर्मपत्नीशब्द-स्यान्यथा साधुत्वे निर्बाधेऽपि* भाष्यविरुद्धकल्पनया चतुर्थीसमाससमा-श्रयणेन साधुत्वं प्रतिपादयन्तोऽश्रद्धेयवचना एवेति सुधियोविभावयन्तु।

---

## संस्कृतसाहित्यपरिषदो वार्षिकाधिवेशनम्

व्यतीते सौराश्विनमासस्य वेदविमिते बुधवासरे सायं षड्वादनसमये 'इउनिभार्सिटि इनष्टिटिउट्' इत्याख्यप्रतिष्ठानगृहे नाटोराधिपतीनां साहित्यिकप्रवराणां श्रीमतां महाराज-योगीन्द्रनाथराय-महोदयानामाध्य-क्ष्येण संस्कृतसाहित्यपरिषदो द्वाविंशवर्षीयमधिवेशनं सुसम्पन्नमभूत्। तत्र चाद्येतिकृत्यानामुद्बोधनसङ्गीतादीनामनुष्ठानानन्तरमुन्मोचितं सभापतिना महाराजेन स्वर्गीय-महामहोपाध्याय-कामाख्यानाथतर्कवागीश-महोदयानां तैलचित्रम्। सभाध्यक्षाणामभिभाषणात् परं परिषत्सदस्यैरभिनीतं क्षेमीश्वरकृतचण्डकौशिकं वत्सराजकविकृत-हास्यचूडामणिश्चेति रूपकद्वयम्। हृदयङ्गमोऽभिनयः शर्वर्याः सर्वनाडीन्धमोऽपि सामाजिकानामसेचनकतां बिभ्रच्छैलूषाणामभिनयकौशलमन्वमापयत्।

वार्षिकविवरणादिकमतः परं प्रकाशयिष्यते।

---

* धर्मपत्नीशब्दे चतुर्थीसमासो वा षष्ठीसमासो वेति विप्रतिपत्तौ प्रकृति-विकृतिभावाभावेऽपि चतुर्थीसमास इति सिद्धान्तमवलम्ब्य चतुर्थीसमासपक्षः पण्डितप्रवर-श्रीक्षितीशचन्द्रचट्टोपाध्यायैरवलम्बितः। पण्डितप्रवर-श्रीहाराण-चन्द्रभट्टाचार्यास्तु प्रकृतिविकृतिभाव एवार्थबलि-हित-सुख-रक्षितव्यतिरिक्तस्थले तादर्थ्ये चतुर्थीसमास इति सिद्धान्तस्यैव साधुत्वं मन्वानाः—आशापत्नीशब्द-वदुपपत्तिं समर्थयन्ते। धर्मसम्बन्धांशेऽनुवादमभिप्रेत्य धर्मस्य पत्नी धर्मपत्नीति-अश्वघासादिस्थल इव षष्ठीसमासपक्षः कथं न संभवति? आशापत्नीवदुपपत्तौ तु स्त्रियां धर्मसम्बन्धः कथं प्रतीयेतेत्या लोचनीयम्। सं० सा० प० प० सं०

संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम्॥

| | | |
|---|---|---|
| December, 1938 | १८६०-शकीये अग्रहायणे २१श-वर्षस्य ८म-संख्या | Vol XXI, No. 8 |


# अद्वैतमतम्

[ स्वनामधन्य-जगद्गुरु-श्रीशङ्कराचार्य-श्रीकाञ्चीकामकोटीपीठाधीशानाम् ]

( पूर्वानुवृत्तम् )

तत् कुत्रचनोपदिश्यते। अद्वैतं कुत्रोपदिश्यते? परब्रह्मस्वरूपमधिकृत्योपदेशस्थाने उपदिश्यते। माण्डूक्योपनिषदि प्रणवस्वरूपस्योपदेशप्रकरणे सर्वमद्वैतम्, तदेव सर्वमित्युपसंहृत्योपदेशावसरे'ऽद्वैतमि'ति पदं वर्तते। द्वैतमिति पदमेकस्यामुपनिषदि वर्तते। 'स्वयं पृथग् भूत्वा पृथग् वस्तु कथं पश्येत्! सर्वस्मिन्नात्मसाद्भूते किं को वा पृथग् अनुभवेत्? इत्येतत् प्रकृत्योपदेशावसरे "यत्र हि द्वैतमिव भवति" इति वदति।' द्वैतमिव यत्रावस्थायां वर्तते, तत्र तथाऽस्तीति वदति।

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्। इति बृहदारण्यके—यदा सर्वमात्मसादभवत्, तदाऽद्वैतम्, पृथक् पृथग् दर्शनावस्थायां द्वैतमिवेत्युक्तमस्ति। इवेति स्थले द्वैतम्, आत्मसादभवदित्यत्राद्वैतं चोक्तमस्ति। 'तु' इत्येकं पदमद्वैतस्योप-

देशावसरे वर्तते। एकस्य पदस्यानन्तरं 'तु' अथवा अथेति पदं समापतति चेत्, तदनन्तरमुपसंहृत्यान्यदेकं वदाम इति मन्तव्यम्। 'यत्र तु' इति स्थले सर्वमात्मसाद्भवदित्युक्तमस्ति। 'तु' इत्यनेनोपसंहारः—आत्मस्वरूपमेव सर्वमिति ज्ञातुमर्हामः। इवेति चेत्, प्रतिभासमात्रम्, न तु सत्यमस्ति। स इवेति वदामश्चेत्, न स इति प्रतीयते। तदेवं द्वैतमिवेत्युक्ते द्वैतं नास्तीत्येव सिद्धान्तः। अस्माकं चक्षुषा प्रतीयमानं द्वैतम्। तत् केवलं प्रातिभासिकम्। शास्त्रेण ज्ञायमानमद्वैतम्। तदेव सिद्धान्तः। 'सर्वमात्मैव' इत्येव सत्यम्।

अत्रात्मेति वर्तते खलु! परमात्मेति खलु स्यात्? इति प्रष्टुं शक्यते। परमात्मेत्युच्यते चेत्, क्षुद्रात्मा कश्चन स्यात्। तथा कोऽपि नास्ति, इति हेतोः परमात्माऽपि नास्ति। सर्वमात्मैव। द्वैतावस्थायामेव परमात्मा जीवात्मेति। अद्वैतसद्भावे तु आत्मैव।

"द्वितीयाद्वै भयं भवति" इति बृहदारण्यकोपनिषदि द्वैतेन भीतिः, दुःखम्, वेदना च भवन्तीत्युच्यते। द्वयोर्विषमयोर्वस्तुनोस्सतोरेव कामना, भीतिः, दुःखमित्यादीन्युद्भवन्ति।

अस्माकं प्रिया म्रियन्ते चेद् दुःखमुदेति। अस्माकं पुरतस्ते म्रियन्ते चेत्, दुःखमुद्भवति, वयं गच्छामश्चेत्, दुःखं न भवेत् खल्विति चिन्तयामः। अस्मासु गतेष्वस्माकं न दुःखं स्यात्। अस्मास्वेव सर्वसाद्भूतेषु दुःखमेव न भवति। दुःखस्य प्रतिभाने भेदस्मरणं वर्तते। प्रीतिः कुतो भवति? द्वे इति प्रतीत्यैव। अस्मभ्योऽन्यः कश्चनेति चिन्तयैव प्रीतिः, तद्वियोगेन दुःखं चोदेति। अस्मास्वेव तद्भावमापन्नेषु वियोग एव न भवति, दुःखमेव न भवति। एकसात् कथं कर्तव्यम्? सर्वं परमात्मसाद्भवति चेत्, एक एवात्मा स्यात्।

तत एव द्वितीयं मा भवतु। अद्वैतमेव सत्यमिति वेदान्ता उद्घुष्यन्ति। इमं विषयमस्मदाचार्यपादाः प्रदीपवद् ग्राहयित्वा मा विस्मरतेति विशदमवभासयन्ति स्म। "भाष्यदीप" इति भाष्यस्यैकं नाम। वेदे द्वैतमिति-पदं

समापतति, इति सहसा 'द्वैतम्' 'द्वैतम्' इति वक्तुं प्रक्रमन्ते। तत् कुत्र प्रकरणे ? किमर्थम् ! कस्योपसंहारस्य पुरतः प्रयुक्तमिति नालोचयन्ति। "न सुरां पिबेत्" इति यदि स्याद् वेदे तर्हि सुरापानमासीदिति विमर्शन-सदृक्षमेवेदमस्ति।

वयमिदानीं स्वप्नावस्थायां वर्तामहे। इत उत्थाने सैवाद्वैतावस्था। स सिद्धान्तः स्मृतौ यदि स्यात्, लक्षेष्वेकोऽपि वा तामवस्थां प्राप्तुं प्रयतेतेति पूर्वजाश्शास्त्राणि लिखित्वाऽस्थापयन्। काश्यां गङ्गा वर्तत इति ज्ञानमात्रं न पर्याप्तम्। अनुमतिपत्रं गृहीत्वा धूमशकटमधिरुह्य विश्रामस्थानानि सर्वाण्यतिक्रम्य धूमशकटे निद्रां विना च प्रयाय काशीं प्राप्य गङ्गायां स्नात्वाऽनुभवेनैव वयं द्रष्टुमर्हामः।

अद्वैतावस्था वाङ्मनसयोरप्राप्य निवृत्तिस्थानमिति वेदो वदति। "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सहे"ति तैत्तिरीयोपनिषदि वेदो वदति। मनसा मन्तुमशक्यं चेत्, कथं ज्ञातुमर्हामः ? वेदोक्तेरपि को वा भावः ? परमात्मानं जानीयामेति चेद् ज्ञेयं वस्तु तद्भवति। ज्ञाताऽपरो भवेत्, केनोपनिषदि मम मतमिति विदुषो न मतं भवति, मम न मतमिति जानन्नेव विद्वानित्युक्तमस्ति—

"यस्यामतं तस्य मतं मतं यस्य न वेद सः। इति अमतमिति चेन्, किम् ? तद् न मतमिति। दीपं प्रकाशयितुमपरं दीपं यद्यानयामः, तर्हि तस्य न कोऽप्यर्थः। जडस्यैव दीपोऽपेक्ष्यते। दीपं ज्ञातुमपरं किमपि नापेक्ष्यते। ज्ञानं स्वत एव प्रकाशते। तद् ज्ञानमेवास्य स्वरूपम्, यो नामेश्वरः। 'तेवारम्'तिरुवाचकम्' 'तायुमानवरपॉट्टल्' इत्यादि द्राविड-ग्रन्थेषु बहुषु स्थानेषु ईश्वरः ज्ञान ! ज्ञानस्वरूपेत्यामन्त्र्यते।

तद् मनसा न मन्यते। मनस्तेनैव मन्यते। मनसा मन्यमानं सर्वं मिथ्या। येन तद् मन्यते, तत् सत्यम्। "यन्मनसा न मनुते येनाहु-र्मनो मतमि"ति केनोपनिषत्।

स्वप्ने मन्यमानं सर्वमनृतम्। पश्यन् ज्ञानमेकमेव सत्यम्। अयमात्मैव

दृश्यमानानि तावन्त्यपि वस्तूनि स्वप्न आसीत्। स्वप्ने विरते एकमेवा-वशेषितमस्तीति ज्ञायते। उच्यमानं वस्तु, ज्ञायमानं वस्तु वेति चेत्, ते पृथगेव भवतः। पृथग् न भवतश्चेत्, न वक्तुमपि प्रभवामः, न ज्ञातुमपि प्रभवामः। इदमद्वैतमुपनिषदो वदन्ति।

वेदाख्ये वृक्षे उपनिषद्रूपाणि पुष्पाणि वर्तन्ते। तानि कण्ठे धारयितुं ग्रन्थितुं योग्यानि सूत्राणि भवन्ति ब्रह्मसूत्राणीति भगवत्पादा वदन्ति स्म—वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणामिति। सूत्राणि कृतवन्तो यदि व्यासाचार्याः, तर्हि तान्यग्रथयन् भगवत्पादाः। तानि धारयितुमर्हामस्तु वयम्। अस्माकं कण्ठे सा माला स्थातुमर्हति।

साम्प्रतमन्ततोऽजानीम—सत्यमेकमेवास्ति; सर्वमीश्वरस्वरूपमित्येव। वासनया पृथक् पृथगवभासते। सर्वमेकसात्कर्तव्यम्। वयमित्येतदप्येकी-कर्तुमर्हामः, तदुपयुक्तानि शास्त्राण्यध्येतुमर्हामः। एतत्साधनानि श्रुति-स्मृतिपुराणानि देवालयदर्शनम्, आराधनादीनि च। प्रापञ्चिकानां विषयाणां कृते यावत् कियदपि परित्यजामः। अस्माकं नित्यानन्दं प्राप्तुं सर्वं कर्तु-मर्हामः। जनको विदेहराज्यमददाम्, मामप्यददामित्यवादीदिति वदन्ति —विदेहं ददामि मां चापि सह दास्यायेति।

इमामवस्थां प्राप्तुं सुलभं साधनं श्रीचन्द्रमौलीश्वरस्योपासनेत्यप्पय्य-दीक्षिता अवदन्। तत सर्वेऽप्यनुसृत्याद्वैतसिद्धिं लभेरन्—

ईश्वरानुग्रहादेव पुंसामद्वैतवासना।
महाभयकृतत्राणा द्वित्राणामुपजायते॥ इति।

शिवतत्त्वविवेके—इति॥

# प्रशान्तरत्नाकरम्

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

( पूर्वानुवृत्तम् )

च्यवनः—अथ किम् । दैवेनाद्य वयमनुगृहीताः ।

धन—( स्वगतम् ) अये, कुतः खलु सहसा रत्नाकरस्य तावान् धनागमः ? तत् संशयितोऽस्मि ।

राजपुरुषः—( स्वगतं ) अये, नूनमत्रैव दैवेनानुग्रहः कृतः ! महदिदं सन्देहपदं वर्तते । यदैव राजप्रासादात्तस्कराणां प्रभूतधनहरणं तदैव रत्नाकरस्य दरिद्रस्यापि गेहे प्रभूतधनागम इति । तद् वृत्तमिदमविलम्बितमेव राजकुले निवेद्य रक्षिणां प्राणान् परिरक्षामि ( निष्क्रान्तः ) ।

धन—आर्य, बहुतिथः खलु कालो मे मन्दभाग्यस्य भगवत्पादसन्दर्शनेन वञ्चितस्य । तत्तादृशीं दुर्गतिं गतस्यापि भगवतः कथमेतावता कालेन तादृगवस्थापरिवृत्तिरिति विशेषतः श्रोतुमिच्छामि ।

च्यवनः—भद्र, धनदत्त, श्रूयतां यदि कौतूहलम् । जानास्येव त्वं यथा पूर्वतः प्रायेण प्रत्यहमेव त्वत्समीपतः 'परतो निर्यातयिष्यामि' इत्युक्त्वा सर्वोपकरणमूल्यमृणीकृत्य संसारयात्रां निरवाहयमिति ।

धन—एवं जानामि । अथवा किमिदम् ऋणं मन्यते ? सर्वमेव मामकं वस्तु स्वकीयमवगन्तुमर्हत्यार्यः ।

च्यवनः—अथ यदा अल्पेनाल्पेनापि प्रत्यहमुपचीयमानेन ऋणभारेण भारो महानेव बभूव, तदा लज्जया पुनः प्रार्थनाय भवत्समीपमुपगन्तुमसमर्थो भिक्षामेव समालम्बितवानस्मि ।

धन—ततस्ततः ?

च्यवनः—ततः क्रमेण दुर्भिक्षपीडिते जनपदे भिक्षापि सुतरां दुर्लभतामाससाद ।

धन—ततस्ततः ?

च्यवनः—ततः कदाचित् क्षुधार्तेषु परिजनेषु रत्नाकरः पुत्रो मे भिक्षाटनाय बहिर्गतः। अथ क्रमेण पश्चिमाकाशप्रान्तपतितेऽपि सवितरि तमप्रत्यावृत्तं समीक्ष्य गृहे क्षुधया सुतरां परिक्लिष्टान् स्वजनानुपेक्षितुमशक्तः स्वयमपि भिक्षार्थं बहिर्गन्तुमुपक्रान्तो मूर्च्छितः पतितोऽभूवम्। तदैव च रत्नाकरः प्रभूतोपकरणसमेतो गृहे प्रत्यावृत्तः सर्वान् समुज्जीवितवान्। पृष्टश्चासौ 'केनापि मित्रेण स्वनामकीर्तनमनिच्छता सर्वाण्युपकरणानि दत्तानी'त्यवोचत्। ततः प्रभृत्येव सुखेन संसारयात्रां निर्वर्तयामि। एवमन्तरान्तरैव तेन रत्नाकरस्य परममित्रेण प्रदीयन्ते सर्वाण्युपकरणानि। सम्प्रति च तेन पुनस्तावन्ति धनानि प्रदत्तानि, यैः सुतरामेव दारिद्र्यानमुक्तोऽस्मि।

धन—अहो! परमोदारं खलु मित्रं रत्नाकरस्य, किन्तु नासौ भवतापि नाम्ना परिज्ञायते ?

च्यवनः—नहि, नहि, केवलममुं रत्नाकर एव जानाति। रत्नाकरोऽपि प्रायेण तस्यैव गेहे रहस्यमवतिष्ठते। अस्माभिरपि तद्विज्ञानाय न तथा क्रियते निर्बन्धः!

धन—(अपवार्य पुत्रं प्रति ) हा मूढ, एवं कञ्चन सुहृदमपि नासादयितुमर्हसि ? ( प्रकाशम् ) तदिदानीं दिष्ट्या सुखित आर्यः ?

च्यवनः—कथमपि देवताप्रसादात्।

( ततः प्रविशति राजपुरुषैः सह राष्ट्रियः )

राष्ट्रियः—आं समादिष्टोऽस्मि महाराजेन, यथा राष्ट्रिय, भिक्षामात्रजीवी रत्नाकरस्य पिता च्यवनो नाम सहसा प्रभूतधनसमृद्धो धनदत्तस्याद्य शतद्वयम् ऋणं निर्यातयति, तदेतेन गृहीतप्रायं तस्करमवगच्छामि, त्वं सत्वरं धनदत्तस्यापणे गत्वा च्यवनं सपौत्रं बद्ध्वा कठोरकशाप्रहारैः सन्ताड्य प्रकृतं तथ्यं मूढस्य रत्नाकरस्य स्थितिपदञ्च समुद्घाटयेति। तद् यावत् तत्र गत्वा स्वं नियोगमशून्यं करोमि। ( दृष्ट्वा ) अये एष सपौत्रश्च्यवनो धनदत्तस्यापणमधितिष्ठति, तद् यावत् प्रकृतमनुतिष्ठामि। ( उपसृत्य ) अरे

राजपुरुषाः ! किमद्यापि पश्यथ, बद्ध्वा सबालमेनं ब्राह्मणं ताडयित्वा राजादेशमशून्यं कुरुत ।

( राजपुरुषा यथोक्तमनुतिष्ठन्ति )

च्यवनः—अब्रह्मण्यं भो अब्रह्मण्यम् !

आत्रेयः—भो राजपुरुषाः ! कथं निरपराधेष्वस्मासु एवं कुरुथ ?

राष्ट्रियः—धिक् प्रागल्भ्यम् ! अयमपि कारणं पृच्छति ! अरे किं पश्यथ, पीडयत । ( राजपुरुषास्तथा कुर्वन्ति )

च्यवनः—भद्र, राष्ट्रिय, किमेवं निरपराधानस्मानेवं पीडयसि ?

राष्ट्रियः—भो ब्राह्मण, परकीयं धनं स्वीयं कृत्वा ऋणं निर्यातयतामपि यदि नापराधाः ? कस्य तर्हि अपराधः स्यात् ? अरे धनदत्त, दीयतां सर्वमिदं धनं, यत् प्रतिपादितमनेन साहसिकेन ।

च्यवनः—भद्र, राष्ट्रिय किमिति, नावधारयामि ?

राष्ट्रियः—अवधारयिष्यसि । अरे धनदत्त, देहि शीघ्रम् ।

धन—भद्र, राष्ट्रिय, किमिव ?

राष्ट्रियः—किं वा प्रष्टव्यम् ? ( कर्णे ) एवमेवम् ।

धन—आम् एवमिदम् ? ममाप्येवमेव संशयः । अहो दशाविपर्यासेन च्यवनस्याप्येवं चित्तपरिवृत्तिः, रत्नाकरस्यापि ? अथवा सर्वमेव सम्भाव्यते दशाविपर्यासेन ! तत् का गतिः ? अरे मणिदत्त, दीयतां सर्वमेव तद्धनम्, यदनेन च्यवनेन दत्तम् ! ( स्वगतं ) अहह ! शतद्वयमद्य महता भाग्येन करतलगतमपि नश्यति ! हा दैव ! ( ललाटे कराघातं करोति ) अथवा मूढः खलु मणिदत्तो यः संख्यालेखविचारेण महान्तमेव कालं यापितवान् । च्यवनोऽप्यतिवृद्धतया सुतरां मूढो यः कालमनपेक्ष्य सद्य एव ऋणनिर्यातनाय मामभियातः । ( प्रकाशं ) अरे मणिदत्त, किं विलम्बसे, सत्वरं देहि ।

मणि—तात, किं कथयसि, किं ददामि ?

राष्ट्रियः—अद्यापि नावधारयसि ? च्यवनेन दत्तं शतद्वयम् ।

मणि—च्यवनेन दत्तम् ! अपि तद्दत्तं च्यवनेन ?

च्यवनः—अथ किम् ? प्रदत्तमेव तत्।

मणि—कः साक्षी ?

राजपुरुषः—ननु अहमेव साक्षी।

मणि—कथमिव ? भवानिदानीमेव समागतः।

राजपुरुषः—वणिक्कुमार, अलमनेन कूटप्रबन्धेन, च्यवनेन वसन-ग्रन्थितः समुद्धृत्य प्रदत्तं, त्वया च विशेषतः परीक्ष्य गणयित्वा गृहीतम्।

मणि—किमेवं वदसि ? अहन्तु तथा न स्मरामि।

राष्ट्रियः—भोः पुरुष ! सत्यं ब्रवीषि ?

राजपुरुषः—स्वामिन्, अथ किम्, किमसत्यं स्वामिने महाराजाय च क्षेमकामो निवेदयति ? एष च्यवनाद् गृहीत्वा सन्निहितायां लोहपेटिकायां स्थापितवान्।

राष्ट्रियः—अरे वणिक्पुत्र, उद्घाट्यतां लोहपेटिका।

मणि—( अन्विष्य ) अहो ! अस्याः कुञ्चिका नासाद्यते, क्व नु खलु सा ?

राष्ट्रियः—दुष्ट, वणिक्कुमार, एप कुञ्चिकामासादयिष्यसि। अरे, राजपुरुषाः ! एष ताड्यतां तावत् यावत् कुञ्चिका नासाद्यते।

( राजपुरुषाः—कशाभिर्मणिदत्तं ताडयन्ति )

मणि—हा हतोऽस्मि, हा मारितोऽस्मि !

धन—भो राजपुरुषाः ! मर्षयत, मर्षयत, एषः अहमेव कुञ्चिका-मन्विष्य धनं ददामि। ( जनान्तिकम् ) मूर्ख, राजपुरुषेष्वपि तथा छलं कुरुषे ? धिङ् मूर्ख ! (स्वगतम्) अथवा नूनमेवं वाणिज्यं वर्द्धयिष्यति। भवतु प्रकृतमनुतिष्ठामि। ( कुञ्चिकामासाद्य तया लोहपेटिकामुद्घाट्य ततो गोणी-गतं शतद्वयं राष्ट्रियाय उपनयति ) भद्र, इदं तद् गृह्यताम्।

राष्ट्रियः—इदं गृह्यते। ( गृहीत्वा ) भोः सत्यवादिन्, वणिक्पुत्र, इदानीं स्मरसि यत् च्यवनेन शतद्वयं दत्तमिति ?

मणि—अथ किम्।

राष्ट्रियः—भो राजपुरुषाः! निगडेन बद्ध्वा एनं ताडयन्तो राजकुलं नयत, यावदस्य राजधनमपह्नुवानस्य महाराजः स्वयमेव प्राणहरं दण्डमाज्ञापयति।

राजपुरुषाः—यथाज्ञापयति स्वामी। ( बद्ध्वा ताडयन्ति )

मणि—( सवैक्लव्यम् ) हा हतोऽस्मि, हा हा मारितोऽस्मि !!

धन—भद्र, राष्ट्रिय, मर्षयतु मर्षयतु भवान्। अज्ञानेनेदमनुष्ठितम्।

राष्ट्रियः—मूढ, किं न ज्ञायते, अज्ञानेनापि समास्कन्दितो वह्निर्दहत्येवेति। तदनुभवतु मूढो राजापथ्यकारितायाः फलम्।

धन—भद्र, राष्ट्रिय, अनुकम्पस्व माम्। किञ्चित्ते सुरामूल्यं दास्यामि।

राष्ट्रियः—आम्! अथवा वाङ्मात्रे कः प्रत्ययः?

धन—एतद् गृहाण ( ददाति )।

राष्ट्रियः—एका सुवर्णमुद्रा? धिक्! न तावन्मात्रेण शक्यते मोक्तुम्। अरे ताड्यतां पुनरपि।

धन—( स्वगतम् ) हा दैव! ( प्रकाशम् ) भद्र, मर्षयतु भवान् मर्षयतु। एषः अपरामपि ददामि।

राष्ट्रियः—अरे मुच्यतामिदानीमेषः। पुनरप्येवं कुर्वाणो न सोढव्यः।

धन—को वा सन्देहः।

राजपुरुषाः—यथाज्ञापयति स्वामी। ( मणिदत्तं कण्ठे धृत्वा क्षिपन्ति ) गच्छ रे वराक, स्वामिना मुक्तोऽसि।

मणि—अहो उज्जीवितोऽस्मि।

धन—( स्वगतं ) हा हा सुवर्णमुद्राद्वयं मे विनष्टम्। हा मूर्खपुत्र!

मणि—तात, अलमतः परमपि आपणप्रसारणेन! सम्प्रति आपणे कवाटं योजयित्वा रक्षिपुरुषान् रक्षणाय सन्दिश्य गेहं प्रतिष्ठामहे।

धन—एवमस्तु। बहुप्रत्यवायो राजपुरुषसन्निधिः। ( प्रकाशम् ) भद्र, राष्ट्रिय, गमनाय नः समाज्ञापयितुमर्हसि।

राष्ट्रियः—एवम्, शक्यमिदानीं प्रस्थातुम्।

धन—( पुत्रेणं सह गच्छन ) हा मूर्ख, तवैव बुद्धिलाघवेन न केवलं करगतं शतद्वयं भ्रष्टम्, परं तत्कुसीदरूपेण सुवर्णमुद्राद्वयमपि हारितम्।

मणि—आम्! सुवर्णमुद्राद्वयम्? मत्परित्राणाय? हा धिक् हा धिक्! तात, अलं मे परित्राणेन! अलं मे परित्राणेन!!

धन—आः मूर्ख, विरम विरम, अलमिदानीमतिमौर्ख्येण। गच्छ।

मणि—हा सुवर्णमुद्रायुगल! कदा पुनस्त्वद्दर्शनं लप्स्ये? (निष्क्रान्तौ)।

राष्ट्रियः—अरे, राजपुरुषाः! साम्प्रतं प्रकृतं साधयत। ताडयत पुनरपि सपौत्रं च्यवनम्। ( राजपुरुषास्तथा कुर्वन्ति )

च्यवनः—भद्र, राष्ट्रिय, किन्तु खलु बालमेनं वृद्धञ्च मां निर्दयं ताडयसि। विशेषतः कथय, को नामावयोरपराध इति।

राष्ट्रियः—भो ब्राह्मण, कुतस्ते भिक्षामात्रोपजीविनोऽपि एकपदे तावान् धनागमः?

च्यवनः—कथमस्माकं धनागमे दोषसन्देहः? तत् किन्तु खल्विदम्? अथवा

दारिद्र्यस्य प्रभावोऽयं यद्दीने दोषसंशयः।
देवताः स्वस्ति कुर्वन्तु निर्दोषस्य ममाचिरम्॥

राष्ट्रियः—भोः कथय, अलं मिथ्याश्रयणेन।

राज्ञां चारदृशां नास्ति किमप्यविदितं रहः।
सत्यं कथय भद्रन्ते येन सम्भाव्यते पुरः॥

च्यवनः—भद्र, राष्ट्रिय, जीवनान्तेऽपि समुपनते च्यवनो न मिथ्या प्रयुङ्क्ते।

राष्ट्रियः—अत एवासौ परधनं स्वीयमिति कृत्वा ऋणं निर्यातयितुमुपक्रमते।

च्यवनः—अहो धिग् व्रीडितोऽस्मि ।

आत्रेयः—भो राष्ट्रिय, किमेवमसम्बद्धमभिधीयते ?

राष्ट्रियः—असम्बद्धमिति ? धिक् शान्तम् ! मूढ, अपि जानासि, कुतो युष्माकमकस्मादेतावद्धनागम इति ?

आत्रेयः—कथं न जानामि ?

राष्ट्रियः—तत् कथय, कुत इति ।

आत्रेयः—तातप्रसादात् ।

राष्ट्रियः—स तातप्रसादः कस्य प्रसादात् ?

आत्रेयः—तदीयस्य मित्रस्य प्रसादात् ।

राष्ट्रियः—अपि जानासि तस्य मित्रस्य नामधेयम् ?

आत्रेयः—न जानीमः ।

राष्ट्रियः—वयं जानीमः—

च्यवनः—भद्र, कथय, किमिति ?

राष्ट्रियः—पूर्वेद्युः साहसेन राजकुले चौर्यमिति ।

च्यवनः—( स्वगतम् ) अहो ! स्फुटमिदमिदानीम् । तत् किम् ईदृश एव रत्नाकरः संवृत्तः ?

आत्रेयः—धिक् ! मिथ्यैतदाह ।

राष्ट्रियः—अहो रे साहसं चौरपुत्रकस्य ! नातः परमपि शक्यं सोढुम् ! अरे राजपुरुषाः ! कर्कशकशाघातेन सत्वरमेनं प्रगल्भबालं शमं लम्भयत । मूढ, चौरपुत्र, पुनः पुनरेव आत्मानमविजानन् जल्पसि ? अरे राजपुरुषाः !

राजपुरुषाः—यथाज्ञापयति स्वामी । ( तथा कुर्वन्ति )

च्यवनः—भो राष्ट्रिय, मा तावदेवम् । मर्षय भो मर्षय—भो भो राजपुरुषाः ! मा तावदेवम् ।

बालानामपराधेऽपि गुरुदण्डो न धार्यते ।
करुणा क्रियते स्नेहान्मृष्यतां बालचापलम् ॥

आत्रेयः—(कठोरं ताड्यमानः ) हा तात, क्वासि ? हा तात, ( पतति )।

च्यवनः—अहह !

प्राणोपमस्य वत्सस्य कशाघातेन देहतः ।
स्यन्दते रक्तनिष्यन्दश्च्यवनोऽद्यापि जीवति ॥

अयि भो राष्ट्रिय, कुरु वृद्धेऽपि मय्यनुकम्पाम्। अथवा—

यदि नास्ति क्षमा चित्ते तदस्य रुदतः शिशोः ।
अपराधानुरूपं यत् तन्मय्येव वितीर्यताम् ॥

राष्ट्रियः—एवमविनीतेषु तीक्ष्णदण्डो राजा। भोः पुरुषाः ! ताडयत।

राजपुरुषाः—तथा ( ताडयन्ति )।

च्यवनः—मा नाम भोः ! मा नाम शिशुस्ताड्यताम्। मां ताडयत। हा हा तथापि ताड्यते ?

राष्ट्रियः—अरे ! कृत्यं प्रतिबध्नात्येष वृद्धः, तदेनमपि भृशं ताडयित्वा शमं लम्भयत।

पुरुषाः—तथा ( ताडयन्ति )।

च्यवनः—अहह ! विशीर्यन्ते अस्थिसङ्घाताः ! हा रत्नाकर, क्वासि ?

राष्ट्रियः—भो ब्राह्मण, कथय, क्वाधुना रत्नाकरो वसति ?

च्यवनः—( स्वगतं ) सम्प्रति जानन्नपि न कथयामि, किं पुनरजानन् ? ( प्रकाशं ) मित्रगृहे वसतीति मन्यते।

राष्ट्रियः—क्व तस्य मित्रगृहम् ?

च्यवनः—न जानामि।

राष्ट्रियः—मृषावादिन्, एवमुपकुर्वाणस्यापि गृहं न जानासीति सूपपन्नं खल्वेतत् !

च्यवनः—भद्र, राष्ट्रिय, भूतार्थं निवेद्यते। न जानामि।

राष्ट्रियः—( आत्रेयं प्रति ) अरे प्रगल्भ ! त्वं जानासि ?

( क्रमशः )

---

# *श्रीमहाभारतस्य कालनिर्णयः

[ निबन्धकः—के. भि. अनन्तनारायणशास्त्री ]

समस्तं वाङ्मयं व्यासो यत्रायातं समार्पिपत् ।
तस्यात्र भारताख्यस्य वर्ण्यते कालनिर्णयः ॥

सुविदितमिदं जगत्याबालगोपालं यद्गीर्वाणभाषामयं श्रीव्यासाचार्यप्रसारितं महाभारतं नाम ग्रन्थरत्नं तदितरसर्वदेशीयभाषाग्रथितग्रन्थेभ्योऽपि नितरामतिशयकोटिमधिरोहतीति । नह्यन्यभाषाग्रथितग्रन्थराशयः श्रीव्यासभावलेशमपि यथावद्विवेचयितुं प्रभवन्ति । नानाकविवरविरचितकाव्यनाटकादिग्रन्थेषु कथाभागांश्च महाभारतादेव संगृह्य भङ्ग्यन्तरेण विरचितानुत्पश्यामः । अत एव 'व्यासोत्सृष्टं जगत्सर्वमि'त्याभाणकः समन्वेति । विलसन्ति चात्र श्रौताः स्मार्ताश्च वैदिका धर्माः, पुरुषार्थाः, वर्णाश्रमाचाराः, स्त्री-शूद्रसाधारणा नानानृपाख्यायिकागर्भिता धर्माश्च ।

ब्राह्मणेतराणां वेदानधिकारमुपलक्ष्य सुलभतस्तान्वैदिकधर्मान्बोधयितुं लक्षेण श्लोकैरष्टादशभिः पर्वभिः सविस्तरं बृहत्तरं ग्रन्थमिमं निर्माय स्वशिष्यप्रशिष्यद्वारा इहपरफलेप्सूनां तत्तदुचितकर्मवितानेन श्रीव्यासाचार्या भृशमुपचक्रिरे । पठनश्रवणमननैरपि सुतरामेतन्मनोपितं फलं वितरति ।

ब्राह्म-पाद्म-भविष्य-मार्कण्डेयादीनि च पुराणानि श्रीभागवतं चास्य महिमानं प्रकटयन्ति । यथा—श्रीव्यासाचार्या जगतां हिताय भारततैलेन ज्ञानदीपमुद्दीपयांबभूवुः । पुष्पवतोः किरणोदय इव जागतवस्तूनामस्याप्युदये परवस्तुन उपलब्धिर्नियमेन भवति । इदं च भारतं कुसुमं गीतार्थरूपं मनोहरं सुरभि नानाख्यानरूप-केसरैर्युतं सत् सुधीषट्पदानां मधुदानेन परमुपकरोति । इत्यादि ।

---

* अयं लेखः म० म० श्रीमतां एम्. वि रामानुजाचार्याणां द्रविडभाषामयलेखस्य गैर्वाण्यामनुवादरूपेण मया संगृहीतः ॥

पारेसमुद्रमपि निखिलाङ्ग्लेयविपश्चिद्वराः प्रततमेतदीयगुणगरिमाणं स्वधिया परिशीलयन्ति। एतद्विषये नानाग्रन्थराशीनपि प्राणैषुः।

तदेवं निरतिशयितमहिम्नोऽस्य साभिप्रायभेदप्रकटनं कालनिर्णयं समारभामहे। भारते महाप्रस्थाने पर्वणि भारतसमरसमाप्तेरनु ३६वर्षाणामनन्तरं श्रीकृष्णः स्वं धाम ययौ। तदनु कलेरुदये अन्तरा श्रीशं राज्यभारे निषीदन्तः पाण्डवाः परीक्षिते समर्प्य राज्यं प्रास्थिषतेति वर्तते। तदैव कलिरजनि। अधुना च कलेः 5038 वर्षाण्यतीयुः। एतच्च वृत्तमासेतुहिमशैलमेकान्तत एव सन्तः प्रतिपद्यन्ते। कल्युदयात्प्राक् 36 वर्षेभ्यो युद्धमासीदिति भाति। एतमेव पुराणादीन्यभिप्रेयुः। तेषु चैवं दृश्यते।

मगधाधिपं बृहद्रथवंश्यं मार्जारिम् ( सोमापिं ) आरभ्य रिपुञ्जयपर्यन्तं 22 नृपाः 1006 वर्षाणि प्रद्योतवंश्यं प्रद्योतमारभ्य नन्दिवर्धान्तं 5 नृपाः 138 शैशुनागवंश्यं शिशुनागमारभ्य महानन्दिपर्यन्तं 10 नृपाः 360 व०, नन्दवंशे महापद्मनन्दस्तत्सोदरा अष्टौ च 9 नृ०-100 व०, मौर्ये चन्द्रगुप्तादि-बृहद्रथान्ताः 12 नृ० 316 व०, सुङ्गे पुष्यमित्रादि देवभूत्यन्तं 10 नृ०, 300 व०, कण्वे वासुदेवादि-सुशर्मान्ताः 4 नृ०, 85 व०, आन्ध्रे सुमुखादि-पुलोमान्ताः 32 नृ०, 506 व०, गुप्ते चन्द्रगुप्तादि-द्वितीयकुमारगुप्तान्ताः 8 नृ०, 245 वर्षाणि च राज्यमबिभरुरिति। अत्रैककर्तृकत्वेन पुराणादिषु भिद्यमानानि नृपनामानि लेखकप्रमादमूलकान्येवेति व्यवस्यामः। सन्तश्च हस्तलिखितपुस्तकपरामर्शेन निश्चिन्वन्तु। तानि च पुराणानि सोमापिः जारासन्धेः सहदेवस्य सुतः परीक्षित्समकालिक इत्याहुः। अनेन प्रागुक्त-नवनृपवंश्या भारतकालादनन्तरं 3056 वर्षाणि राजानो बभूवुरिति ज्ञायते।

श्रीभास्कराचार्यकृतसिद्धान्तशिरोमणिग्रन्थे कलेः 3179 वर्षेष्वतीतेषु शालिवाहनशक इति दृश्यते। एवं च कलि-शालिवाहन शककाल-मेलनेन (3179+1860-5039) वर्षाणि भवन्ति। तथा च क्रिस्तोः प्राक् (5039−1938=3101) इति संपद्यते।

चालुक्यवंश्यद्वितीयपुलकेशिकाले अहोलागिरिनिकटवर्तिजिनालय-

शासनं च भारतयुद्धादनन्तरं 3735तमे वर्षे अजनीति दृष्टम्। एतेनापि (3735 – 556 = 3179)तमे ( क्रिस्तोः पश्चात् 78 वर्षे ( शकारम्भ इति कलिवर्षाणि 5039 ज्ञापयति।

आलबरूनिनामा तुरुष्कचरित्रकारः क्रिस्तोः पश्चात् 1031तमे कलेः 4132 वर्षाणीत्याह। एतस्य वचनं चाद्य यावत् (1938 – 1031 = 907 × 4132 – 5039) 4132 – 1031 = क्रिस्तोः प्राक् 3101 इति प्रागुक्तमेव कलिकालमनुदर्शयति।

अबुलफाजललिखित आयीनिअक्बरीग्रन्थे युधिष्ठिरशकीय- 3044 वर्षे विक्रमशकारम्भ इत्यस्ति। विक्रमशक इदानीं 1995 आहत्य (3044 × 1995 = 5039 कलिवर्षाणि।

शतपथब्राह्मणे अम्बाल्यम्बिकासुभद्रार्जुनफल्गुनपरीक्षिज्जनमेजयादिनामानि भारतीयानि दृश्यन्ते। एतच्च ब्राह्मणं क्रिस्तोः प्राक् 3000 वर्षेभ्यः प्रागासीत्। एतद् ब्राह्मणमध्यकाल एव भारतकाल इति विद्याशोधका मन्वते। तदा कृत्तिकर्क्षं प्राचि स्थितमित्यस्ति। अधुना किञ्चिदुदङ्मुखे तच्चलनेन प्रायो नक्षत्रचलनकालः 5000 वर्षाणि स्युरिति च विभावयन्ति। अतश्च पुराणशासनचरित्रज्योतिरादिषु कलिः 5000 वर्षाण्यत्यवीवहदिति स्फुटम्।

एतादृशवचनोल्लेखानां मूलमधस्तनविद्वद्ग्रन्था अपि—

श्री—चिं-वि-वैद्य—The Mahabharata-a Criticism.

,, हरिविलास शारदा The Hindu Superiority.

,, एम्—जगन्नाथ-राव् The age of the Mahabharata war.

एम्. कृष्णमाचार्या A History of Classical Sanskrit Literature.

अत्र केचन प्रागुक्तानां विरोधेन कलिकालं भारतकालं च व्यत्यस्यन्ति। सप्रमाणं च विवदन्ते। यथा—ज्योतिर्विदो वराहमिहिराचार्याः।

आसन्मघासु मुनयः शासति पृथिवीं युधिष्ठिरे नृपतौ।

षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्ञश्च। इति गर्गोक्तं दर्शयन्तः

प्रमाणयन्ति। तस्य च यौधिष्ठिरे राज्यकाले 2526तमेऽब्दे शककाल इत्यर्थापयन्ति। एवं च 2526 अब्दैर्मेलनेन (शकस्य) युधिष्ठिरराज्यकाल- इति च। परन्तु कीदृशः शक इति मृग्यम्। कल्हणस्तु राजतरङ्गिणी-काराः शालिवाहनमाचक्षते। शालिवाहनशकश्च कलेः-0179तमेऽब्दे जनितः। स च कल्हणः क्रिस्तोः पूर्वं 3101 वर्षेभ्यः प्राक् स शकः प्रवृत्त इत्याह। अतोऽपि 3179तमे प्रवृत्तं तच्छकं 2526तमे प्रवृत्तं प्रदर्श्य (3179 – 2526) = 653 न्यूनीकुर्वन्ति। एतत्समर्थनाय कुरुपाण्डवाः 653 पर्यन्तमवस्थिताः ततः परमेव युद्धमासीदिति च भणन्ति। एतेषां वचनं भारतपुराणादि-वचनैः सह विरुध्यते। किं च क्रिस्तोः प्राक्तनः ततः पश्चात् 78तमे प्रवृत्त-शालिवाहनशकविषये कथं प्रावर्ततेति विमर्शनीयम्। केचित्तु तच्छकं बुद्ध-निर्वाणमभिप्रयन्ति।

'आसन्मघासु...इति वचनस्यार्थान्तरकल्पने तु 2566इत्यपि स्यात्। तेन सह बुद्धनिर्वाणशकीय543 वर्षाणां मेलनात् क्रिस्तोः प्राक्3109 वर्षाणीति भवति। ईदृश्येव गर्गवचनस्योपपत्तिर्वाच्या। क्रिस्तोः पूर्वं3101 इति प्रागुक्तवचनेनेदमष्टभिरेव वर्षैर्विरुध्येतेतीपत्तारतम्यं न दोषावहं भवति। परन्तु कल्हणस्य कलेरूर्ध्वं 653तमे पाण्डवकालनिर्णयवचनं चिन्त्यमेव।

क्रिस्तोः प्राग् महा अलगसाण्डरेण सह तृतीयस्तके हिन्दुस्थानमागता ग्रीकूजनाः सण्टरकोटस इत्येकं कंचित्पुरुषं प्रदर्श्योदाहृतवन्तः। तमेव पुरुषं 18 शतकान्ते सर् विलियं जोन्स इति कश्चन संशोधकोऽन्ये च केचन सुधियः क्रिस्तोः प्राक् 1535—150 पर्यन्तं राज्यकर्ता मौर्यवंश-चन्द्रगुप्त इत्याहुः। एषां वचनमपि प्रागुक्तपुराणादिभिर्विरुध्यते। किन्तु ग्रीक्जनप्रतिपाद्यः स पुरुषः क्रिस्तोः प्राक् 328—321 पर्यन्तं गुप्तवंश्यः प्रथमश्चन्द्रगुप्तनामा राजैव राज्यमबिभरिति भाति। एतेन अशोकनाम्ना प्रथमानशासनेषु ग्रीक्जनाभिमतमौर्यवंश्यचन्द्रगुप्तस्य नप्तुरशोकस्यैव तन्नामेत्युक्तिरपि परास्यते। गुप्तवंश्यचन्द्रगुप्तपुत्रं समुद्रगुप्तम् अशोकमभिदधुः 'शासनेषु प्रियदर्शी', 'देवानां प्रियः' इत्येवमभिधान्तरैः प्रदर्शयामासुरिति च।

श्रीक्जनचरित्रकाराभिमत-हिराक्लिसाभिधेयः कृष्ण एव चन्द्रगुप्तस्य तत्पित्रादिपूर्वपुरुषपरम्परायां 138 तमः प्राक्तन इति च श्रीक्जनाशयः। चरित्रकारसरण्या एकैकपुरुषस्य20 वर्षावधिभेदेन कृष्ण-चन्द्रगुप्तयोरन्तरा 138×20=2760 वर्षाणि स्युः। कृष्णकालश्च क्रिस्तु-पूर्वं 3102। एतेन 2760 वर्षाणामूर्ध्वं जातस्य गुप्तवंश्यचन्द्रगुप्तस्ववर्णनमेवाञ्जसं भवति। तत्कालश्च क्रिस्तोः प्राक् 328 वर्षेष्विति प्रकृत्य (2760+328=3088) इति भवति। एवं च न्यूनातिरेकतः कृष्णकालः समन्वेति। एतेनापि श्रीक्जनाभिमतश्चन्द्रगुप्तो गुप्तवंश्य इत्येव निर्णीतः। परे केऽपि भारतं युद्धं क्रिस्तोः प्राक् 1922,1810,1733 इत्येवं विविधं कालभेदमुदाजहुः। तद्विवेचनमत्र ग्रन्थविस्तरभिया नोपक्रम्यते। एवं भारतग्रन्थकालमपि किंचिदिव वर्णयामः। महाभारतचरित्रसंभवकाले तदा तदा श्रीव्यासाचार्या दर्शनादिना पाण्डवाननुजगृहुः, इति तद्ग्रन्थ एव स्फुरति। इदं च भारतं पारीक्षिताय जनमेजयाय वैशंपायन उपदिदेश। परीक्षितो राज्यारम्भे कल्युदयः। ततो जनमेजयाय भारतोपदेशेन कलेः प्रथमशतकपूर्वार्धे भारतं व्यरचीति न आशयः। एतेन क्रिस्तोः प्राक् 200 वा 300 वर्षेभ्यः प्राग् एतदुदभूदिति केषांचिच्चरित्रकाराणामाशया नादरार्हा इति स्फुटमेव। तस्मात् पुराणाद्यनुवचनैः सहाधुनिकसर्वविदेशीयपण्डिताभिप्रायानप्यनुरुध्य माध्यस्थ्यावलम्बनेन कतर एतयोः पक्षः साधीयानिति विवेचयन्तु। अवहितमतयो विद्वांसो यथायथं सनातनमार्गमवलम्ब्य प्राचीनचरित्रकोशादीन सश्रद्धं विवेकेन परिशील्य ऋजुमार्गे प्रवृत्य परानपि तद्वत्प्रवर्तयन्तश्चिरतरमिह प्रसिद्धाः पराय श्रेयसे प्रकल्पन्ते।

# देवीविसर्जनव्यवस्थाविमर्शः

[ निबन्धकः—श्रीचण्डीचरण-तर्कतीर्थः ]

तत्र राजमार्तण्डः

मूलेन प्रतिपूजयेद् भगवतीं चण्डीं प्रचण्डाकृतिं
चामुण्डामुपवाससंयतधिया भक्त्या समाराध्य च ।
नानापाशुकमज्जमांसरुधिरैः कृत्वा नवम्यां बलिं
नक्षत्रं श्रवणं तिथिञ्च दशमीं सम्प्राप्य सम्प्रेषयेत् ।। इति ।

दुर्गाभक्तितरङ्गिण्यां

मूलं प्राप्य प्रथमचरणेऽभ्यर्चनं चण्डिकायाः
कृत्वाऽष्टम्यामशनरहितस्त्यक्तनिद्रश्च पूजाम् ।
प्रातः काले पशुबलिविधिः स्नानदानं नवम्यां
निर्माल्यञ्च श्रवणदशमीद्वयात्मकर्क्षेषु जह्यात् ।। इति ।

चक्रनारायण्यां क्रियायोगसंवादे च

शरत्काले महापूजा क्रियते या च वार्षिकी ।
सा कार्योदयगामिन्यां न तत्र तिथियुग्मता ।।
प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् ।
प्रातः प्रातश्च सम्पूज्य प्रातरेव विसर्जयेत् ।। इति ।

नन्दिकेश्वरपुराणे

भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः ।
तिथावुदयगामिन्यां सर्वास्ताः कारयेद् बुधः ।। इति ।

लिङ्गपुराणे च

अष्टाहे विसृजेच्छक्रं तदर्द्धेन तु पार्वतीम् ।
न्यूनाधिकं न कर्तव्यं राज्ञो राष्ट्रधनक्षयात् ।। इति ।

उद्धृतवचनजातेन देवीविसर्जने दशमीतिथिकर्त्तव्यत्वं, नवमीपूजाव्यवहितोत्तरत्वं, सप्तमीपूजादिनावधिकचतुर्थदिनन्यूनाधिकदिननिषेधः, पूर्वाह्णतिथिकर्तव्यता, उदयगामितिथिप्राशस्त्यं, श्रवणनक्षत्रद्वयात्मकलग्नादिर्गुणफलकत्वञ्च प्रतिपादितानि।

उदयगामित्वस्य पूर्वाह्णत्वनियतत्वात् ( व्याप्यत्वात् ) उदयगामित्वस्य ग्रहणे पूर्वाह्णत्वस्यापि ग्रहणमिति उभयदिने कर्मयोग्यपूर्वाह्णतिथिलाभे न्यूनाधिकदिननिषेधशास्त्राविरोधे परदिने विसर्जनम्। उदयगामित्वस्य पुनरलाभे पूर्वाह्णशास्त्रात् पूर्वाह्णदशम्यां विसर्जनम्। श्रवणनक्षत्रद्वयात्मकलग्नादेर्गुणफलत्वेन प्रधानानुयायित्वादप्राधान्यम्। चतुर्थदिनन्यूनाधिकदिननिषेधस्य तु सर्वतो बलवत्त्वं निषेधस्य प्राप्तिपूर्वकत्वनियमेन शास्त्रान्तरप्राप्तेस्तदुपजीव्यतया विध्यन्तराणां तद्बाधकत्वासम्भवात्। परन्तु विधेर्निर्विषयतायां क्वचिन्निषेधस्य सङ्कोचः स्यात्। इति संक्षेपतोऽत्र बलाबलपरिच्छेदः।

ननु—"व्रती प्रपूजयेद्देवीं सप्तम्यादिदिनत्रये।
द्वाभ्यां चतुर्भिर्वा ह्रासवृद्धिवशात्तिथेः" ॥ इति—

भविष्यपुराणीयस्य "अष्टाहे विसृजेच्छक्रं तदर्द्धेन तु पार्वतीम्। न्यूनाधिकं न कर्तव्यं राज्ञो राष्ट्रधनक्षयात्" इति लिङ्गपुराणोक्तवचनेन विरोधः। दिनद्वये सप्तम्यादिनवमीपर्यन्ततिथित्रयविहित-पूजात्रयपरिसमाप्तिस्थले तृतीयदिनेऽपि विसर्जनस्यावश्यकत्वात्।

अत्र श्रीरघुनन्दनभट्टाचार्य्याणां तिथितत्त्वसन्दर्भः—"पूर्ववचने ( भविष्यपुराणीयवचने ) प्रपूजयेदित्युक्तत्वात् पूजानुरोधेन न्यूनाधिकदिनस्थितिप्रतिपादनम्। परवचनस्य तु ( लिङ्गपुराणीयवचनस्य ) विसृजेदित्युक्तत्वाद् विसर्जन एव त्र्यहपूजने कृतेऽपि नवमीयुक्तदशम्यां श्रवणानुरोधान्न्यूनत्वप्रसक्तौ, यत्र वा नवमी-षष्ठीदण्डात्मिका, तत्परदिने नवमी, तत्परदिने दशमी, तत्रोदयानुरोधेनाधिकत्वप्रसक्तौ च निषेधकत्वम्। न तु सप्तम्याः षष्ठीदण्डात्मकत्वेन परदिने वृद्धावपि पूर्वदिने निषेधकत्वं" "एवञ्च

पूर्णाष्टम्याम् अष्टमीपूजा, तत्परदिने अष्टमी-नवम्योः सन्धिपूजा, तत्परदिने नवमीपूजा, प्रागुक्त-नन्दिकेश्वरपुराणाद्युक्तोदयगामितिथ्यनुरोधात् तत्परदिने विसर्जनं पूजानुरोधेनाधिकदिनलाभात्" इति ।

तेषामयमाशयः—भविष्यपुराणीयवचने तिथेर्ह्रासवशाद् दिनद्वये पूजात्रयपरिसमाप्तेरुक्ततया तादृशस्थले सप्तमीपूजादिनावधिकतृतीयदिने पूजाव्यवहितोत्तरदिनत्वेन पूजाया उदीच्याङ्गविसर्जनस्य कर्तव्यवापातात् लिङ्गपुराणीय-निषेधवचनस्य सङ्कोचेन चतुर्थदिनन्यूनदिनेऽपि ( तृतीयदिने ) विसर्जनम् ; एवं सप्तम्या अष्टम्या वा तिथेर्वृद्ध्या दिनचतुष्टयेऽपि पूजात्रयपरिसमाप्तेरुक्तत्वात् सप्तमीपूजादिनावधिकपञ्चमदिने नवमीपूजोत्तरदिनत्वेन पूजाया उदीच्याङ्गविसर्जनस्य कर्तव्यतया लिङ्गपुराणीय-निषेधवचनस्य सङ्कोचेन चतुर्थदिनाधिकदिनेऽपि ( पञ्चमदिने ) विसर्जनमिति ।

अत्रेदमालोचयामः—

यथा दिनद्वयमात्रपूजास्थले नवमीपूजाव्यवहितोत्तरकालत्वावच्छेदेन मुहूर्तान्यूनपूर्वाह्णदशमीयुक्तचतुर्थदिनत्वाभावसत्वात् पूजोत्तराङ्गविसर्जनस्य बाधभिया पूजावरोधप्रसक्तेस्तदनुरोधेन चतुर्थदिनन्यूनदिनेऽपि ( तृतीयदिने ) विसर्जनं निषेधशास्त्रस्य सङ्कोचवशात् प्राप्तं, न तथा षष्टीदण्डात्मिकाया अष्टमीतिथेः परदिने वृद्धौ चतुर्थदिने नवमीपूजास्थले सर्वत्र पञ्चमदिने विसर्जनस्य प्राप्तिरस्ति ; षष्टीदण्डात्मिकाया अष्टमीतिथेः परदिने वृद्धावपि यत्र चतुर्थदिने मुहूर्तान्यूनपूर्वाह्णदशमीयुक्तनवम्यां नवमीपूजा, तत्परदिने मुहूर्तान्यूना दशमीतिथिः ; तत्र चतुर्थदिन एव नवमीपूजानन्तरं पूर्वाह्णदशम्यां विसर्जनस्याधिकदिननिषेधशास्त्रप्रयुक्तं प्राप्तेर्वारयितुमशक्यत्वात् ।

न च पूजानुरोधेन निषेधशास्त्रस्य सङ्कोचान्नात्र तद्विषयतेति,—उदयगामितिथ्यनुरोधात् पञ्चमदिन एव विसर्जनमिति वाच्यम्, वस्तुगत्यात्र पूजानुरोधाभावान्निषेधशास्त्रस्य सङ्कोच एव कर्तुं न शक्यः, येन परिहृत्य निषेधविषयतामुदयगामितिथ्यनुरोधेन पञ्चमदिने विसर्जनमनुष्ठेयतामर्हतीति ।

पूजानुरोधपदार्थश्चात्र मुहूर्तान्यूनपूर्वाह्णदशमीयुक्तचतुर्थदिनत्वाभावव्याप्य-

नवमीपूजाव्यवहितोत्तरत्वरूपः। नवमी पूजाव्यवहितोत्तरत्वञ्च—नवमीपूजाधिकरणदिनध्वंसाधिकरणदिनध्वंसानधिकरणत्वे सति नवमीपूजाध्वंसाधिकरणकालत्वरूपं ग्राह्यम्। तादृशपूजानुरोधेन सङ्कोचे सति पूजाविशिष्टदिनान्यन्यूनाधिकदिनयोर्न विसृजेदिति निषेधविधिशरीरम्। पूजावैशिष्ट्यञ्च मुहूर्तान्यूनपूर्वाह्णदशमीयुक्तचतुर्थदिनत्वाभावव्याप्य-स्वाव्यवहितोत्तरत्वविशिष्टदिनत्वसम्बन्धेन। अव्यवहितोत्तरत्ववैशिष्ट्यञ्च सामानाधिकरण्यसम्बन्धेन। एवञ्च यत्र दिनद्वये पूजात्रयपरिसमाप्तिस्तत्र तादृशनवमीपूजाव्यवहितोत्तरकालत्वावच्छेदेन पूर्वाह्णदशमीयुक्तचतुर्थदिनत्वाभावो वर्तत इति निषेधशास्त्रसङ्कोचात् तृतीयदिने विसर्जनम्। यत्र च सप्तम्या अष्टम्या वा तिथेः षष्टीदण्डात्मकत्वेन परदिने वृद्धौ चतुर्थदिने नवमीपूजा, तद्दिने च दशमीतिथेः पूर्वाह्णमुहूर्तभङ्गः, तत्रापि दर्शितमुहूर्तान्यूनपूर्वाह्ण-दशमीयुक्त-चतुर्थदिनत्वाभावव्याप्यनवमीपूजाव्यवहितोत्तरत्वरूप—पूजानुरोधसत्वादधिकदिननिषेधशास्त्रस्य विषयसङ्कोचेन पञ्चमदिने विसर्जनम्। न तु सप्तम्या अष्टम्या वा षष्टीदण्डात्मकत्वेन परदिने वृद्धावपि यत्र चतुर्थदिने नवमीपूजा, मुहूर्तान्यूना च तद्दिने पूर्वाह्णदशमीतिथिः तत्रापि पञ्चमदिने विसर्जनं तत्र नवमीपूजाव्यवहितोत्तरकाले मुहूर्तान्यूनपूर्वाह्णदशमीयुक्तचतुर्थदिनत्वसत्त्वेन उक्तपूजानुरोधस्याभावात्।

प्रातः प्रातश्च संपूज्येति क्त्वा प्रत्ययेन दर्शितरूपस्यैवाव्यवहितोत्तरत्वस्य विसर्जननिमित्ततायाः प्रतिपादनात्—तादृशाव्यवहितोत्तरत्वस्यैवात्र पूजानुरोधघटकत्वमावश्यकम्। अत एव त्र्यहपूजने कृते नवमीयुक्तदशम्यां श्रवणलाभेऽपि, तत्र नवमीपूजाव्यवहितोत्तरकालत्वावच्छेदेन पूर्वाह्णदशमीयुक्तचतुर्थदिनत्वाभावस्यासत्वान्न तृतीयदिने विसर्जनप्रसक्तिः। नापि नवम्याः षष्टीदण्डात्मकत्वेन यत्र परदिने नवमीयुक्तदशमी तत्परदिने च मुहूर्तान्यूनदशमी, तत्रोदयगामिदशम्यामपि पञ्चमदिने विसर्जनस्य प्रसङ्गः। तत्रापि नवमीपूजाव्यवहितोत्तरकालत्वावच्छेदेन पूर्वाह्णदशमीयुक्तचतुर्थदिनत्वाभावस्यासत्वात्।

